विग्गहगइमावन्ना केवलिणो समुहया अजोगी य ।
सिद्धा य अणाहारा सेसा आहारगा जीवा ॥६८॥

[ विग्रहगतिमापन्नाः केवलिनः समवहता अयोगिनश्च ।
सिद्धाश्चानाहारकाः शेषा आहारका जीवाः ॥६८॥ ]

विग्रहगतिमापन्ना अपान्तरालगतिवृत्तय इत्यर्थः । केवलिनः समवहताः समुद्घातं गताः । अयोगिनश्च केवलिन एव शैलेश्यवस्थायामिति । सिद्धाश्च मुक्तिभाजः । एतेऽनाहारका ओजाद्याहाराणामन्यतमेनाप्यमी नाहारयन्तीत्यर्थः । शेषा उक्तविलक्षणा आहारका जीवा ओजलोमप्रक्षेपाहाराणां यथासंभवं येन केनचिदाहारेणेति । तेऽपि यावन्तं कालमनाहारकाः तांस्तथाभिधातुकाम आह—

एगाइ तिन्निसमया तिन्नेवऽन्तोमुहुत्तमित्तं च ।
साई अपज्जवसियं कालमणाहारगा कमसो ॥६९॥

[ एकाद्यांस्त्रीन्समयान् त्रीनेव अन्तर्मुहूर्तमात्रं च ।
साद्यपर्यवसितं कालमनाहारकाः क्रमशः ॥६९॥ ]

एकाद्यांस्त्रीन्समयान् विग्रहगतिमापन्ना अनाहारकाः । उक्तं च "एकं द्वौ वानाहारकः" इति ( तत्त्वार्थाधिगम सूत्रं २-३१ ) वाशब्दात्त्रिसमयग्रहः । त्रीनेव समयाननाहारकाः समुद्घाते केवलिनः । यथोक्तम्—

कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च।
समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमात् ॥ १ ॥
(प्रशमरति २७५—२७६)

अन्तर्मुहूर्तं चानाहारका अयोगिकेवलिनः तत ऊर्ध्वम-योगिकेवलित्वाभावादपवर्गप्राप्तेः । साद्यपर्यवसितं कालमना-हारकाः सिद्धा व्यक्त्यपेक्षया तेषां सादित्वादपर्यवसितत्वाच्च । अत एवाह क्रमश एवंभूतेनैव क्रमेणेति गाथार्थः ।

व्याख्यातमाहारकद्वारं सांप्रतं पर्याप्तकद्वारमाह ।

नारयदेवा तिरिमणुय गब्भया जे असंखवासाऊ।
एए य अपज्जत्ता उववाए चेव बोद्धव्वा ॥७०॥

[ नारकदेवाः तिर्यङ्मनुष्या गर्भजा येऽसंख्येयवर्षायुषः ।
एते चापर्याप्ता उपपात एव बोद्धव्याः ॥ ७० ॥ ]

नारकाश्च देवाश्च नारकदेवास्तथा तिर्यङ्मनुष्याः तिर्य-ञ्चश्च मनुष्याश्चेति विग्रहः गर्भजा गर्भव्युत्क्रान्तिकाः, संमूर्च्छि-मव्यवच्छेदार्थमेतत् । ते च सङ्ख्येयवर्षायुषोऽपि भवन्ति तद्व्य-वच्छेदार्थमाह । येऽसङ्ख्येयवर्षायुष इति । एते चापर्याप्ता आहारशरीरेन्द्रियप्राणापानभाषामनःपर्याप्तिभी रहिता उपपात एव उत्पद्यमानावस्थायामेव बोद्धव्या विज्ञेया न तूत्तरकालं पर्याप्ता लब्धितोऽपीति ।

सेसा उ तिरियमणुया लद्धिं पप्पोववायकाले य ।
उभओ वि अ भइअव्वा पज्जत्तियरेत्तिजिणवयणं ॥

[ शेषास्तु तिर्यङ्मनुष्या लब्धि प्राप्योपपातकाले च ।
उभयतोऽपि भाज्याः पर्याप्तेतरे इति जिनवचनम् ॥७१॥ ]

शेषास्तु तिर्यङ्मनुष्याः संमूर्छनजाः सङ्ख्येयवर्षायुषश्च गर्भजाः । किं लब्धि प्राप्य पर्याप्तकलब्धिमधिकृत्य उपपातकाले चोत्पद्यमानावस्थायां च । किं । उभयतोऽपि भाज्या विकल्पनीयाः पर्याप्तका इतरे वापर्याप्तकाः । एतदुक्तं भवति । लब्धितोऽपि पर्याप्ता अपर्याप्तका अपि भवन्ति । उपपातावस्थायां त्वपर्याप्तका एव । इति जिनवचनं इत्येष आगम इति ।

व्याख्यातं पर्याप्तकद्वारं तदनन्तरं शुकलपाक्षिकद्वारमाह—

जेसिमवड्ढोपुग्गलपरियट्टो सेसओ उ संसारो ।
ते सुक्कपक्खिआ खलु अहिए पुण किन्हपक्खिया ॥

[ येषामपार्धपुद्गलपरावर्त एव शेषः संसारः ।
ते शुक्लपाक्षिकाः खलु अधिके पुनः कृष्णपाक्षिकाः ॥७२॥ ]

येषामपार्धपुद्गलपरावर्त एव शेषः संसारस्तत ऊर्ध्वं सेत्स्यन्ति ते शुक्लपाक्षिकाः क्षीणप्रायसंसाराः खलुशब्दो

विशेषणार्थः प्राप्तदर्शना वा अप्राप्तदर्शना वा सन्तीति विशेषयति । अधिके पुनरुपार्धपुद्गलपरावर्ते संसारे कृष्णपाक्षिकाः क्रूरकर्माण इत्यर्थः । पुद्गलपरावर्तो नाम त्रैलोक्यगतपुद्गलानामौदारिकादिप्रकारेण ग्रहणं । उपार्धपुद्गलपरावर्तस्तु किंचिन्न्यूनोऽर्धपुद्गलपरावर्त इति ।

एतद्द्वारोपयोग्ये च वक्तव्यताशेषमाह—

**पायमिह कूरकम्मा भवसिद्धिया वि दाहिणिल्लेसु ।**
**नेरइयतिरियमणुया सुरा य ठाणेसु गच्छंति ।७३।**

[ प्राय इह क्रूरकर्माणः भवसिद्धिका अपि दक्षिणेषु ।
नारकतिर्यङ्मनुष्याः सुराश्च स्थानेषु गच्छन्ति ।।७३।। ]

प्राय इह क्रूरकर्माणः । बाहुल्येनैतदेवमिति दर्शनार्थं प्रायोग्रहणं । भवसिद्धिका अप्येकभवमोक्षयायिनोऽपि दक्षिणेषु नारकतिर्यङ्मनुष्याः सुराश्च स्थानेषु गच्छन्ति । अत एवोक्तं "दाहिणदिसिगामिए किण्हपक्खिए नेरइए" इत्यादि । एतदुक्तं भवति । नरकभवनद्वीपसमुद्रविमानेषु दक्षिणदिग्भागव्यवस्थितेषु कृष्णपाक्षिका नारकादय उत्पद्यन्त इति । आह भारतादितीर्थकरादिभिर्व्यभिचारः, न, तेषां प्रायोग्रहणेन व्युदासादिति ।

शुक्लपाक्षिकद्वारानन्तरं सोपक्रमायुर्द्वारमाह—

देवा नेरइया वा असंखवासाउआ य तिरिमणुया ।
उत्तमपुरिसा य तहा चरमसरीरा य निरुवकमा ।७४।

[ देवा नारकाश्च असंख्येयवर्षायुषश्च तिर्यङ्मनुष्याः ।
उत्तमपुरुषाश्च तथा चरमशरीराश्च निरुपक्रमाः ।।७४।। ]

देवा नारकाश्चैते सामान्येनैव । असङ्ख्येयवर्षायुषश्च तिर्यङ्मनुष्या एतेन सङ्ख्येयवर्षायुषां व्यवच्छेदः । उत्तमपुरुषाश्चक्रवर्त्यादयो गृह्यन्ते । चरमशरीराश्चाविशेषेणैव तीर्थकरादयः । निरुपक्रमा इत्येते निरुपक्रमायुष एव अकालमरणरहिता इति ।

सेसा संसारत्था भइया सोवक्कमा व इयरे वा ।
सोवक्कमनिरुवक्कमभेओ भणिओ समासेणं ।७५।

[ शेषाः संसारस्था भाज्याः सोपक्रमा वा इतरे वा ।
सोपक्रमनिरुपक्रमभेदो भणितः समासेन ।। ७५ ।। ]

शेषाः संसारस्था अनन्तरोदितव्यतिरिक्ताः सङ्ख्येयवर्षायुष अनुत्तमपुरुषा अचरमशरीराश्च । एते भाज्या विकल्पनीयाः । कथं सोपक्रमा वा इतरे वा कदाचित्सोपक्रमाः कदाचिन्निरुपक्रमा उभयमप्येतेषु संभवतीति सोपक्रमनिरुपक्रमभेदो भणितः समासेन संक्षेपेण । न तु कर्मभूमजादिविभागविस्तरेणेति ।

उक्तं सोपक्रमद्वारं तदभिधानाच्च संसारिणो जीवाः । सांप्रतं मुक्तानभिधित्सुराह—

**मुत्ता अणेगभेया तित्थतित्थयरतदियरा चेव ।**
**सयपत्तेयविबुद्धा बुहबोहिय सन्नगिहिलिंगे ॥७६॥**

[ मुक्ता अनेकभेदाः तीर्थतीर्थकरतदितरे चैव ।
स्वयंप्रत्येकबुद्धा बुधबोधिताः स्वान्यगृहिलिङ्गाः ॥७६॥ ]

मुक्ताश्च सिद्धाः ते चानेकभेदा अनेकप्रकाराः । तीर्थतीर्थकरतदितरे चेति, अनेन सूचनात्सूत्रमिति कृत्वा तीर्थसिद्धा अतीर्थसिद्धास्तीर्थकरसिद्धा अतीर्थकरसिद्धाश्च गृह्यन्ते । तत्र तीर्थे सिद्धास्तीर्थसिद्धाः । तीर्थं पुनश्चातुर्वर्णः श्रमणसंघः प्रथमगणधरो वा । तथा चोक्तं " तित्थं भंते तित्थं तित्थगरे तित्थं गोयमा अरहं ताव नियमा तित्थंकरे तित्थं पुण चाउव्वन्नो समणसंघो पढमगणधरो वा " इत्यादि । ततश्च तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः ॥ अतीर्थे सिद्धा अतीर्थसिद्धास्तीर्थान्तरसिद्धा इत्यर्थः । श्रूयते च " जिणंतरे साहुवोच्छेउत्ति " तत्रापि जातिस्मरणादिना अवाप्तापवर्गमार्गाः सिध्यन्ति एवं, मरुदेवीप्रभृतयो वा अतीर्थसिद्धास्तदा तीर्थस्यानुत्पन्नत्वात् ॥ तीर्थकरसिद्धास्तीर्थकरा एव ॥ अतीर्थकरसिद्धा अन्ये सामान्यकेवलिनः ॥ स्वयंप्रत्येकबुद्धा इत्यनेन स्वयंबुद्धसिद्धाः प्रत्येकबुद्धसिद्धाश्च गृह्यन्ते । तत्र स्वयंबुद्धसिद्धाः स्वयंबुद्धाः सन्तो ये सिद्धाः । प्रत्येकबुद्धसिद्धाः प्रत्येकबुद्धास्सन्तो ये सिद्धा इति । अथ स्वयंबुद्धप्रत्येकबुद्धयोः कः प्रतिविशेष

इति । उच्यते । बोध्युपधिश्रुतलिङ्गकृतो विशेषः तथाहि स्वयंबुद्धा बाह्यप्रत्ययमन्तरेणै व बुध्यन्ते प्रत्येकबुद्धास्तु न तद्विरहेण, श्रूयते च बाह्यप्रत्ययवृषभादिसयन्व्यपेक्षा करकंडूवादीनां प्रत्येकबुद्धानां बोधिरिति । उपधिस्तु स्वयंबुद्धानां द्वादशविधः पात्रादिः प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्जः । स्वयंबुद्धानां पूर्वाधीतश्रुतेऽनियमः प्रत्येकबुद्धानां नियमतो भवत्येव । लिङ्गप्रतिपत्तिः स्वयंबुद्धानामाचार्यसन्निधावपि भवति प्रत्येकबुद्धानां तु देवता प्रयच्छतीत्यलं विस्तरेण ॥ बुद्धबोधिता इति बुद्धबोधितसिद्धाः बुद्धा आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते इह गृह्यन्ते ॥ स्वान्यगृहिलिङ्गा इति स्वलिङ्गसिद्धा अन्यलिङ्गसिद्धा गृहिलिङ्गसिद्धा । तत्र स्वलिङ्गसिद्धा द्रव्यलिङ्गं प्रति रजोहरणगोच्छकधारिणः । अन्यलिङ्गसिद्धाः परिव्राजकादिलिङ्गसिद्धाः । गृहिलिङ्गसिद्धा मरुदेवीप्रभृतय इति ॥

## इत्थीपुरिसनपुंसग एगाणेग तह समयभिन्ना य ।
## एसो जीवसमासो इतो इयरं पवक्खामि ॥७७॥

[ स्त्रीपुरुषनपुंसका एकानेके तथा समयभिन्नाश्च ।
एष जीवसमासोऽत इतरं प्रवक्ष्यामि ॥ ७७ ॥ ]

एते च सर्वेऽपि केचित् स्त्रीलिङ्गसिद्धाः केचित् पुंलिङ्गसिद्धाः केचिन्नपुंसकलिङ्गसिद्धाः । आह किं तीर्थकरा अपि स्त्रीलिङ्गसिद्धा भवन्ति । भवन्तीत्याह । यत उक्तं

सिद्धप्राभृते "सव्वत्थोवा तित्थगरिसिद्धा तित्थगरितित्थे नोतित्थसिद्धा असङ्ख्येयगुणा तित्थगरितित्थे णोतित्थगरि- सिद्धा उ असङ्ख्येयगुणा उ तित्थगरितित्थे णोतित्थगरसिद्धा असङ्ख्येयगुणा" इति । न नपुंसकलिङ्गे सिद्धाः । प्रत्येक- बुद्धास्तु पुंलिङ्गा एव ॥ एकानेक इति । एकसिद्धा अनेक- सिद्धाः । तत्रैकसिद्धा एकस्मिन्समये एक एव सिद्धः । अने- कसिद्धा एकस्मिन्समये द्व्यादयो यावदष्टशतं सिद्धमिति । उक्तं च—

बत्तीसा अडयाला सट्ठी बावत्तरी य बोधव्वा ।
चुलसीई छन्नउइ दुरहिय अट्ठुत्तरसयं च ॥ १ ॥

तथा समयभिन्नाश्चेति । प्रथमसमयसिद्धा अप्रथमसमय- सिद्धा इत्यादि । तत्र अप्रथमसमयसिद्धाः परम्पर*सिद्धिविशेषण- प्रथमसमयवर्तिनः सिद्धत्वद्वितीयसमयवर्तिन इत्यर्थः त्र्यादिषु तु द्विसमयसिद्धादयः प्रोच्यन्ते । यद्वा सामान्येन ×प्रथमसमय सिद्धाभिधानं विशेषतो द्विसमयादिसिद्धाभिधानमिति ॥ आह तीर्थातीर्थसिद्धभेदद्वय एवान्तर्भावादलं शेषभेदैरिति, न आद्य- भेदद्वयादेवोत्तरभेदाप्रतिपत्तेः शिष्यमतिविकाशार्थश्च शास्त्रारम्भ इति । एष उक्तलक्षणो जीवसमासो जीवसंक्षेप उक्त इति वाक्यशेषः । अत ऊर्ध्वमजीवसमासं प्रवक्ष्यामीति गाथार्थः ॥

* सिद्ध × ( प्रथमसमयवर्तिनः सिद्धाभिधानं )

धम्माधम्मागासा पुग्गल चउहा अजीव मो एए।
गइठिइअवगाहेहिं फासाईहिं च गम्मंति ॥७८॥

[ धर्माधर्माकाशाः पुद्गलाश्चतुर्धा अजीवा एवैते ।
गतिस्थित्यवगाहैः स्पर्शादिभिश्च गम्यन्ते ॥७८॥ ]

तत्र धर्माधर्माकाशा गतिस्थित्यवगाहैर्गम्यन्ते । पुद्गलाश्च स्पर्शादिभिः । असमासकरणं धर्मादीनां त्रयाणामप्यमूर्तत्वेन भिन्नजातीयख्यापनार्थम् । इत्येष गाथाक्षरार्थः । भावार्थस्तु धर्मादिग्रहणेन पदैकदेशेऽपि पदप्रयोगदर्शनाद्धर्मास्तिकायादयो गृह्यन्ते । स्वरूपं चैतेषां—

जीवानां पुद्गलानां च गत्युपष्टम्भकारणम् ।
धर्मास्तिकायो ज्ञानस्य दीपश्चक्षुष्मतो यथा ॥ १ ॥

जीवानां पुद्गलानां च स्थित्युपष्टम्भकारणम् ।
अधर्मः पुरुषस्येव तिष्ठासोरवनिस्समा ॥ २ ॥

जीवानां पुद्गलानां च धर्माधर्मास्तिकाययोः ।
बादरापां घटो यद्वदाकाशमवकाशदम् ॥ ३ ॥

स्पर्शरसगन्धवर्णशब्दा मूर्तस्वभावकाः ।
संघातभेदनिष्पन्नाः पुद्गला जिनदेशिताः ॥ ४ ॥

इति कृतं विस्तरेण । उक्ता अजीवाः सांप्रतमास्रवद्वारमाह—

कायवयमणोकिरियाजोगो सो आसवो सुहो सो अ।
पुन्नस्स मुणेयव्वो विवरीओ होइ पावस्स ॥ ७९ ॥

[ कायवाङ्मनःक्रियायोगः स आश्रवः शुभः स च ।
पुण्यस्य ग्रुणितव्यो विपरीतो भवति पापस्य ॥७९॥ ]

कायवाङ्मनःक्रियायोगः । क्रिया कर्म व्यापार इत्यनर्थान्तरं युज्यत इति योगः युज्यते वानेन करणभूतेनात्मा कर्मणेति योगो व्यापार एव स आस्रवः । आस्रवत्यनेन कर्मत्यास्रवः सरःसलिलावाहिस्रोतोवत् । शुभः स चास्रवः पुण्यस्य ग्रुणितव्यो विपरीतो भवति पापस्येति । आत्मनि कर्माणुप्रवेशमात्रहेतुरास्रव इति ।

उक्त आस्रवः । सांप्रतं बन्ध उच्यते—

**सकसायत्ता जीवो जोगे कम्मस्स पुग्गले लेइ ।**
**सो बंधो पयइठिईअणुभागपएसभेओ ओ ।८०।**

[ सकषायत्वाज्जीवो योग्यान् कर्मणः पुद्गलान् लाति ।
स बन्धः प्रकृतिस्थित्यनुभागप्रदेशभेद एव ॥८०॥ ]

कषायाः क्रोधादयः सह कषायैः सकषायः तद्भावः तस्मात् सकषायत्वाज्जीवो योग्यानुचितान् कर्मणः ज्ञानावरणादेः पुद्गलान् परमाणून् लात्यादत्ते गृह्णातीत्यनर्थान्तरं स बन्धः । योऽसौ तथास्थित्या त्वादानविशेषः स बन्ध इत्युच्यते । स च प्रकृतिस्थित्यनुभावप्रदेशभेद एव भवति । प्रकृतिबन्धो ज्ञानावरणादिप्रकृतिरूपः । स्थितिबन्धोऽस्यैव जघन्येतरा स्थितिः । अनुभावबन्धो यस्य यथायत्यां विपा-

कानुभवनमिति । प्रदेशबन्धस्त्वात्मप्रदेशैर्योगस्तथा कालेनैव विशिष्टविपाकरहितं वेदनमिति ।

उक्तो बन्ध इदानीं संवरमाह—

आसवनिरोह संवर समिईगुत्ताइएहि नायव्वो ।
कम्माणणुवायाणं भावत्थो होइ एयस्स ॥८१॥

[ आश्रवनिरोधः संवरः समितिगुप्त्यादिभिर्ज्ञातव्यः ।
कर्मणामनुपादानं भावार्थो भवत्येतस्य ॥८१॥ ]

आश्रवनिरोधः संवरः । आश्रव उक्त एव । तन्निरोधः कार्त्स्न्येन निश्चयतः सर्वसंवर उच्यते । शेषो व्यवहारसंवर इति । स समितिगुप्त्यादिभिर्ज्ञातव्यः । उक्तं च "स समितिगुप्तिधर्मानुप्रेक्षापरीषहजयचारित्रैः" इत्यादि (तत्त्वार्थाधिगमसूत्रम् ९–४) कर्मणामनुपादानं भावार्थो भवत्येतस्य संवरस्य । इह यावानेवांशः कर्मणामनुपादानहेतुर्धर्मादीनां तावानेवेह गृह्यते । शेषस्य तपस्येवान्तर्भावात् तस्य च प्रागुपात्तक्षयनिमित्तत्वादिति । अत्र बहु वक्तव्यं । तत्तु नोच्यते । गमनिकामात्रत्वादारंभस्येति ।

उक्तः संवर. सांप्रतं निर्जरोच्यते—

तवसा उ निज्जरा इह निज्जरणं खवणनासमेगट्ठा ।
कम्माभावापायणमिह निज्जरमो जिणा बिंति ८२

[ तपसा तु निर्जरा इह निर्जरणं क्षपणं नाश एकार्थाः ।
कर्माभावापादानमिह निर्जरा जिना ब्रुवते ॥८२॥ ]

तपसा तु निर्जरा इह । अनशनादिभेदभिन्नं तपः तेन प्रागुपात्तस्य कर्मणो निर्जरा भवति । निर्जराशब्दार्थमेवाह । निर्जरणं क्षपणं नाश इत्येकार्थाः पर्यायशब्दा इति । नानादेशजविनेयगणप्रतिपत्त्यर्थं अज्ञातज्ञापनार्थं चैतेषामुपादानमदुष्टमेव । अस्या एव भावार्थमाह । कर्माभावापादानमिह निर्जरा जिना ब्रुवते प्रकटार्थमेतदिति ।

उक्ता निर्जरा इदानीं मोक्षमाह—

**नीसेसकम्मविगमो मुक्खो जीवस्स सुद्धरूवस्स ।**
**साइ अपज्जवसाणं अव्वाबाहं अवत्थाणं ॥८३॥**

[ निःशेषकर्मविगमो मोक्षो जीवस्य शुद्धस्वरूपस्य ।
साद्यपर्यवसानमव्याबाधमवस्थानम् ॥ ८३ ॥ ]

निःशेषकर्मविगमो मोक्षः । कृत्स्नकर्मक्षयान्मोक्ष इति वचनात् (तत्त्वार्थाधिगमसूत्रम् १०—१) जीवस्य शुद्धस्वरूपस्य कर्मसंयोगापादितरूपरहितस्येत्यर्थः । साद्यपर्यवसानं अव्याबाधं व्याबाधावर्जितमवस्थानमवस्थितिः जीवस्यासौ मोक्ष इति । साद्यपर्यवसानता चेह व्यक्त्यपेक्षया न तु सामान्येन । मोक्षस्यापि अनादिमत्त्वमिति ।

उक्तं तत्त्वं, अधुना प्रकृतं योजयति—

**एयमिह सद्दहंतो सम्मद्दिट्ठी तओ अ नियमेण ।**
**भवनिव्वेयगुणाओ पसमाइगुणासओ होइ ॥८४॥**

[ एतदिह श्रद्धानः सम्यग्दृष्टिः तकश्च नियमेन ।
भवनिर्वेदगुणात् प्रशमादिगुणाश्रयो भवति ॥ ८४ ॥ ]

एतदनन्तरोदितं जीवाजीवादीह लोके प्रवचने वा श्रद्धानः एवमेवेदमित्यार्द्रान्तःकरणतया प्रतिपद्यमानः सम्यग्दृष्टिरभिधीयते, अविपरीतदर्शनादिति, तकश्च नियमेनासाववश्यंतया भवनिर्वेदगुणात् संसारनिर्वेदगुणेन प्रशमादिगुणाश्रयो भवति उक्तलक्षणानां (५३) प्रशमादिगुणानामाधारो भवति । भवति चेत्थंज्ञाने संसारनिर्वेदगुणः । तस्माच्च प्रशमादयः । प्रतीतमेतदिति अस्यैव व्यतिरेकमाह—

**विवरीयसद्दहाणे मिच्छाभावाओ नत्थि केइ गुणा ।**
**अणभिनिवेसो उ कयाइ होइ सम्मत्तहेऊ वि ।८५।**

[ विपरीतश्रद्धाने मिथ्याभावान्न सन्ति केचन गुणाः ।
अनभिनिवेशस्तु कदाचिद्भवति सम्यक्त्वहेतुरपि ।।८५।। ]

विपरीतश्रद्धाने उक्तलक्षणानां जीवादिपदार्थानामन्यथा श्रद्धाने मिथ्याभावान्न सन्ति केचन गुणाः सर्वत्रैव विपर्ययादिति भावः । विपरीतश्रद्धानेऽप्यनभिनिवेशस्तु एवमेवैतदित्यनध्यवसायस्तु कदाचित्कस्मिंश्चित्काले यद्वा कदाचित् न

नियमेनैव भवति सम्यक्त्वहेतुरपि जायते सम्यक्त्वकारणमपि । यथेन्द्रनागादीनामिति ।

इदं च सम्यक्त्वमतिचाररहितमनुपालनीयमिति । अतस्तानाह—

सम्मत्तस्सइयारा संका कंखा तहेव वितिगिच्छा ।
परपासंडपसंसा संथवमाई य नायव्वा ॥८६॥

[ सम्यक्त्वस्यातिचाराः शङ्का कांक्षा तथैव विचिकित्सा ।
परपाषण्डप्रशंसा संस्तवादयश्च ज्ञातव्याः ॥८६॥ ]

सम्यक्त्वस्य प्राङ्निरूपितशब्दार्थस्यातिचारा अतिचरणानि अतिचारा असदनुष्ठानविशेषाः यैः सम्यक्त्वमतिचरति विराधयति वा । ते च शंकादयः । तथा चाह । शंका कांक्षा तथैव विचिकित्सा परपाषण्डप्रशंसा संस्तवादयश्च ज्ञातव्याः । आदिशब्दादनुपबृंहणास्थिरीकरणादिपरिग्रहः । शंकादीनां स्वरूपं वक्ष्यत्येवेति ।

संसयकरणं संका कंखा अन्नन्नदंसणग्गाहो ।
संतंमि वि वितिगिच्छा सिज्झिज्ज न मे अयं अट्ठो ॥

[ संशयकरणं शङ्का कांक्षान्योन्यदर्शनग्राहः ।
सत्यपि विचिकित्सा सिध्येत न मेऽयमर्थः ॥८७॥ ]

संशयकरणं शङ्का भगवदर्हत्प्रणीतेषु पदार्थेषु धर्मास्ति-

कायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात्सम्यगनवधार्यमाणेषु संशय इत्यर्थः। किमेवं स्यान्नैवमिति। सा पुनर्द्विभेदा। देशसर्वभेदात्। देशशङ्का देशविषया यथा किमयमात्मासङ्ख्येयप्रदेशात्मकः स्यादथ निःप्रदेशो निरवयवः स्यादिति। सर्वशङ्का पुनः सकलास्तिकायव्रात एव किमेवं स्यान्नैवमिति॥ कांक्षान्योन्यदर्शनग्राहः। सुगतादिप्रणीतेषु दर्शनेषु ग्राहोऽभिलाष इति। सा पुनर्द्विभेदा देशसर्वभेदात्। देशविषया एकमेव सौगतं दर्शनमाकांक्षति चित्तजयोऽत्र प्रतिपादितोऽयमेव च प्रधानो मुक्तिहेतुरिति अतो घटमानकमिदं न दूरापेतमिति। सर्वकांक्षा तु सर्वदर्शनान्येव कांक्षति अहिंसाप्रतिपादनपराणि सर्वाण्येव कपिलकणभक्षाक्षपादमतानीह लोके च नात्यन्तक्लेशप्रतिपादनपराणि अतः शोभनान्येवेति॥ सत्यपि विचिकित्सा सिध्येत न मेऽयमर्थ इति। अयमत्र भावार्थः। विचिकित्सा मतिविभ्रमो युक्त्यागमोपपन्नेऽप्यर्थे फलं प्रति संमोहः। किमस्य महतस्तपःक्लेशायासस्य सिकताकणकवलकल्पस्य कनकावल्यादेरायत्यां मम फलसंपद्भविष्यति किं वा नेति। उभयथेह क्रियाः फलवत्यो निष्फलाश्च दृश्यन्ते कृषीबलानाम्। न चेयं शङ्कातो न भिद्यते इत्याशङ्कनीयम्। शंका हि सकला सकलपदार्थभाक्त्वेन द्रव्यगुणविषया। इयं तु क्रियाविषयैव। तत्त्वतस्तु सर्व एते प्रायो मिथ्यात्वमोहनीयोदयतो भवन्तो जीवपरिणामविशेषाः सम्यक्त्वातिचारा

उच्यन्ते । न सूक्ष्मेक्षिका अत्र कार्येति । अथवा विचिकित्सा विद्वज्जुगुप्सा । विद्वांसः साधवो विदितसंसारस्वभावाः परित्यक्तसर्वसङ्गास्तेषां जुगुप्सा निन्दा । तथाहि तेऽस्नानात्प्रस्वेदजलक्लिन्नमलिनत्वात् दुर्गन्धवपुषो भवन्ति तान्निन्दति । को दोषः स्याद्यदि प्राशुकेन वारिणाङ्गप्रक्षालनं कुर्वीरन् भगवन्त इति । इयमपि न कार्या । देहस्यैव परमार्थतोऽशुचित्वादिति ॥

**परपासंडपसंसा सक्काइणमिह वन्नवाओ उ ।**
**तेहिं सह परिचओ जो स संथवो होइ नायव्वो ८८**

[ परपाषंडप्रशंसा शाक्यादीनामिह वर्णवादस्तु ।
तैः सह परिचयो यः स संस्तवो भवति ज्ञातव्यः ८८ ]

परपाषण्डानां सर्वज्ञप्रणीतपाषण्डव्यतिरिक्तानां प्रशंसेति समासः प्रशंसनं प्रशंसा स्तुतिरित्यर्थः । तथा चाह । शाक्यादीनामिह वर्णवादस्तु । शाक्या रक्तभिक्षव आदिशब्दात्परिव्राजकादिपरिग्रहः । वर्णवादः प्रशंसोच्यते पुण्यभाज एते सुलब्धमेभिर्मानुजं जन्म दयालव एत इत्यादि ॥ तैः परपाषण्डैरनन्तरोदितैः सह परिचयो यः स संस्तवो भवति ज्ञातव्यः परपाषण्डसंस्तव इत्यर्थः संस्तव इह संवादजनितः परिचयः संवसनभोजनालापादिलक्षण. परिगृह्यते न स्तवरूपः तथा च लोके प्रतीत एव संपूर्वः स्तौतिः परिचय इति "असंस्तुतेषु प्रसभं भयेषु" इत्यादौ इति ॥

अधुना शंकादीनामतिचारतामाह ।

**संकाए मालिन्नं जायइ चित्तस्सपच्चओ अ जिणे ।**
**सम्मत्ताणुचिओ खलु इइ अइआरो भवे संका ।८९।**

[ शंकायां मालिन्यं जायते चित्तस्य अप्रत्ययश्च जिने ।
सम्यक्त्वानुचितः खलु इति अतिचारो भवति शङ्का ॥८९॥]

शङ्कायामुक्तलक्षणायां सत्यां मालिन्यं जायतेऽवबोधश्रद्धा-प्रकाशमङ्गीकृत्य ध्यामलत्वं जायते । कस्य चित्तस्यान्तः करणस्याप्रत्ययश्च अविश्वासश्च क्व जिनेऽर्हति जायत इति वर्तते । न ह्याप्ततया प्रतिपन्नवचने संशयसमुद्भवः सम्यक्त्वा-नुचितः खलु अयं च भगवत्यप्रत्ययः सम्यक्त्वानुचित एव । न हि सम्यक्त्वमालिन्यं तदभावमन्तरेणैव भवति । इत्येवम-नेन प्रकारेण अतिचारो भवति शङ्का सम्यक्त्वस्येति प्रक्रमा-द्गम्यते । अतिचारश्चेह परिणामविशेषान्नयमतभेदेन वा सत्येतस्मिन् तस्य स्खलनमात्रं तदभावो वा ग्राह्यः । तथा चान्यैरप्युक्तं ।

एकस्मिन्नप्यर्थे संदिग्धे प्रत्ययोऽर्हति हि नष्टः ।
मिथ्या च दर्शनं तत्स चादिहेतुर्भवगतीनाम् ॥ इति

प्रतिपादितं शङ्काया अतिचारत्वम् । अधुना दोषमाह—

**नासइ इमीइ नियमा तत्ताभिनिवेस मो सुकिरिया य।**
**तत्तो अ बंधदोसो तम्हा एयं विवज्जिजज्जा ।९०।**

[ नश्यत्यनया नियमात्तत्त्वाभिनिवेशो मो सुक्रिया च।
ततश्च बन्धदोषः तस्मादेनां विवर्जयेत् ॥ ९० ॥]

नश्यत्यनया शंकया हेतुभूतया अस्यां वा सत्यां नियमान्नियमेनावश्यंतया तत्त्वाभिनिवेशः सम्यक्त्वाध्यवसायः श्रद्धाभावादनुभवसिद्धमेतत्। मो इति पूरणार्थो निपातः। सुक्रिया च शोभना चात्यन्तोपयोगप्रधाना क्रिया च, नश्यति श्रद्धाभावात् एतदपि अनुभवसिद्धमेव। ततश्च तस्माच्च तत्त्वाभिनिवेशसुक्रियानाशात् बन्धदोष' कर्मबन्धापराधः। यस्मादेवं तस्मादेनां शङ्कां विवर्जयेत्। ततश्च मुमुक्षुणा व्यपगतशङ्केन सता मतिदौर्बल्यात्संशयास्पदमपि जिनवचनं सत्यमेव प्रतिपत्तव्यं सर्वज्ञाभिहितत्वात्तदन्यपदार्थवदिति।

उक्तः पारलौकिको दोषः। अधुनैहलौकिकमाह—

इह लोगम्मि वि दिट्ठो संकाए चेव दारुणो दोसो।
अविसयविसयाए खलु पेयापेया उदाहरणं ॥९१॥

[ इह लोकेऽपि दृष्टः शङ्काया एव दारुणो दोषः।
अविषयविषयाया. खलु पेयापेयावुदाहरणम् ॥ ९१ ॥ ]

इह लोकेऽप्यास्तां तावत्परलोक इति दृष्ट उपलब्धः शङ्काया एव सकाशाद्दारुणो दोषः रौद्रोऽपराधः। किमविशेषणशङ्कायाः। नेत्याह। अविषयविषयायाः खलु। खलु-

शब्दोऽवधारणे। अविषयविषयाया एव। अविषयो नाम यत्र शङ्का न कार्यैव।

पेयापेयावुदाहरणं। तच्चेदं। जहा एगंमि नगरे एगस्स सेट्ठिस्स दोन्नि पुत्ता लेहसालाए पढन्ति सिणेहयाए तेसिं माया मा कोइ मुच्छिही अप्पसागारिए मइमेहाकारिं ओसहपेयं देहि तत्थ परिभुंजमाणो चेव एगो चिंतेइ णूणं मच्छियाउ एयाउ तस्स य संकाउ पुणो पुणो वमंतस्स वग्गुलीवाही जाओ मओ य इहलोगभोगाण अणाभागी जाओ। अवरो न माया अहियं चिंतेइ त्ति णिस्संको पियइ णिरुण्ण य गहिओ विज्ञाकलाकलावो इहलोगियभोगाण य आभागी जाउत्ति। उपनयस्तु कृत एवेति।

सांप्रतं कांक्षादिष्वतिचारत्वमाह—

**एवं कंखाईसु वि अइयारत्तं तहेव दोसा य।**
**जोइज्जा नाए पुण पत्तेयं चेव वुच्छामि ॥९२॥**

[ एवं कांक्षादिष्वपि अतिचारत्वं तथैव दोषांश्च।
योजयेत् ज्ञातानि पुनः प्रत्येकमेव वक्ष्ये ॥ ९२ ॥ ]

एवं कांक्षादिष्वपि यथा शङ्कायामतिचारत्वं तथैव दोषांश्च योजयेत्। यतः कांक्षायामपि मालिन्यं जायते चित्तस्याप्रत्ययश्च जिने भगवता प्रतिषिद्धत्वात्। एवं विचिकित्सादिष्वपि

भावनीयं। तस्मान्न कर्तव्याः कांक्षादयः। ज्ञातानि पुनः प्रत्येकमेव कांक्षादिषु वक्ष्येऽभिधास्य इति ॥

रायामच्चो विज्जासाहगसड्ढगसुया य चाणक्को।
सोरट्ठसावओ खलु नाया कंखाइसु हवन्ति ॥९३॥

[ राजामात्यौ विद्यासाधकः श्रावकसुता च चाणक्यः।
सौराष्ट्रश्रावकः खलु ज्ञातानि कांक्षादिषु भवन्ति ॥९३॥]

तत्र कांक्षायां राजामात्यौ, राजकुमारामच्चो य अस्सेणावहरिया अडविं पविट्ठा छुहापरद्धा वणफलादिणि खायंति पडिणियत्ताणं राया चिंतेइ लड्डुयपूलगमाईणि सव्वाणि खामि आगया दोवि जणा रन्ना सूयारा भणिया जं लोए पयरइ तं सव्वं सव्वे रंधेह तेहिं रंधित्ता उवट्ठवियं रन्नो सो राया पेच्छरायेदिट्ठंतं करेइ कप्पडियावलिएहि धाडिज्जंति एवं मिट्ठस्स अवगासे होइ त्ति कणगकुंडगाईणि उंडेराणि वि खइयाणि तेहिं सूलेण मओ। अमच्चेण पुण वमणविरेयणाणि कयाणि सो भोगाणं आभागी जाओ त्ति ॥

विचिकित्सायां विद्यासाधकश्रावकः नंदीसरवरगमणं दिव्वगंधाणं देवसंसग्गेण मित्तस्स पुच्छणं विज्जाए पदाणं साहणं मसाणे चउपायगसिक्कयं हेट्ठा इंगालखायरोयस्तलो अट्ठसयवारा परिजवित्ता पादो सिक्कगस्स च्छिज्जइ एवं बीओ तइओ य च्छिज्जइ। चउत्थे छिन्ने आगासेण वच्चइ तेण सा विज्जा

गहिया कालचउद्दसिरत्ति साहेइ मसाणे चोरो य नयरार-क्खिएहिं पारद्धो (पेल्लिओ) परिभममाणो तत्थेव अइगओ । ताहे वेढेउं मसाणं ठिया पभाए घिप्पिही सो य भमंतो तं विज्जासाहगं पेच्छइ । तेण पुच्छिओ सो भणइ, विज्जं साहेमि । चोरो भणइ—केण ते दिण्णा ? सो भणइ सावगेणं, चोरेण भणियं इमं दव्वं गिण्हाहि विज्जं देहि । सो सड्ढा विचिकिच्छइ सिज्झेज्जा न व इत्ति । तेणं दिन्ना चोरो चिंतेइ सावगो कीडियाएवि पावं नेच्छइ सच्चमेयं सो साहिउमारद्धो सिद्धा । इयरो सलोद्दो (सलुत्तो) गहिओ । तेण आगासगएण लोगो भेसिओ ताहे सो मुक्को दोवि सावगा जायत्ति ॥

विद्वज्जुगुप्सायां श्रावकसुताउदाहरणे—एगो सेट्ठी पव्वंते वल्लइ (तल्लइ) तस्स धूयाविवाहे कहवि साहुणो आगया । सा पिउणा भणिया पुत्तिए पडिलामेहि साहुणो सा मंडिय-पसाहिया पडिलामेइ साहूण जल्लगंधो तीए आघातो सा चिंतेइ । अहो अणवज्जो भट्टारगेहिं धम्मो देसिओ जइ पुण फासुएण पाणीएण ण्हाएज्जा को दोसो होज्जा । सा तस्स ट्ठाणस्स अणालोइय अपडिक्कंता कालं काऊणं रायगिहे गणि-यापाढे समुप्पन्ना । गब्भगया चेव अरइं जणेइ गब्भसाडणेहि य ण सडइ ॥ जाया समाणी उज्जिया । सा गंधेण तं वनं वासेइ । सेणिओ तेण पदेसेण णिग्गच्छइ सामिणो वंदिउ

सो खंधावारो तीए गंधं ण सहइ। रन्ना पुच्छियं—किं एयं तेहिं कहियं दारियाए गंधो गंतूणं दिट्ठा भणइ एस एव पढम पुच्छत्ति गओ वंदित्ता पुच्छइ तओ भगवया तीए उद्धाणपारियावणिया कहिया। तओ राया भणइ कहिं एसा पच्चणुभविस्सइ सुहं वा दुक्खं वा। सामी भणइ एएण कालेण वेइयं इयाणिं सा तव चेव भज्जा भविस्सइ अग्गमहिसी॥ अट्ठ संवच्छराणि जाय तुब्भं रममाणस्स पट्ठीएहं सो लीलं काहिइ तं जाणिज्ज सुवंदित्ता गओ। सा य अवगयगंधा आहीरेण गहिया संवड्ढिया जोव्वणत्था जाया। कोमुइचारं मायाए समं आगया। अभओ सेणिओ य पच्छन्ना कोमु-इचारं पेच्छंति। तीए दारियाए अंगफासेण सेणिओ अज्झो-ववन्नो, नाममुद्दं दसिया तीए बंधइ। अभयस्स कहियं नाम-मुद्दा हरिया मग्गाहि। तेण मणुस्सा दारेहिं बद्धेहिं ठविया। एक्केकं माणुस्सं पलोएऊण णीणिज्जइ। सा दारिया दिट्ठा चोरित्ति गहिया परिणीया य। अन्नया य वस्सोकेण रमंति रायणं राणियाउ पोत्तेण वाहिंति। इयरी पोत्तं दाउं विल-ग्गा रन्ना सरियं मुक्का य पव्वइया॥

परपाषण्डप्रशंसायां चाणक्यः। पाडलिपुत्ते चाणक्को चंदगुत्तेण भिक्खुकाण वित्ती हरिया। ते तस्स धम्मं कहेंति। राया तुस्सइ चाणक्कं पलोएइ ण पसंसइ तेण न देइ। तेहिं चाणक्कभज्जा उलग्गिया ( उलभिया ) तीए सो कण्णीं गाहिउ

तेहिं कहिए भणियं सुहासियं रन्ना तं च अन्नं च दिन्नं । बीयदिवसे चाणक्को भणइ किस ते दिन्नं राया भणइ तुम्हेहिं पसंसियंति । सो भणइ ण मे पसंसियंति सव्वारंभपव्वत्ता कहलोयं पत्तिया वेति । पच्छा ठिउ ( विउ ) केत्तिया एरिसंत्ति ॥

परपाषंडसंस्तवे सौराष्ट्रश्रावकः । सो दुब्भिक्खे भिक्खुएहिं समं पयट्टो भत्तं से देंति अन्नया विसूइयाए मओ । चीवरेण पच्छाइओ अविसुद्धोहिणा पासणं भिखुगाणं दिव्वबाहाए आहारदाणं । सावगाणं खिंसा । जुगपहाणाण कहणं विराहियगुणो त्ति आलोयणं नमोकारपठणं पडिबोहो केत्तिया एरिसन्ति ॥

अन्ने वि य अइयारा आइसद्देण सूइया इत्थ ।
साहंमिअणुववूहणमथिरीकरणाइया ते उ ॥९४॥

[ अन्येऽपि चातिचारा आदिशब्देन सूचिता अत्र ।
साधर्मिकानुपबृंहणास्थिरीकरणादयस्ते तु ॥ ९४ ॥ ]

अन्येऽपि चातिचारा आदिशब्देन सूचिता अत्र । अत्रेति सम्यक्त्वाधिकारे सम्यत्तस्सइयारा (८६) इत्यादिद्वारगाथायामादिशब्देनोल्लिङ्गिता इत्यर्थः । समानधार्मिकानुपबृंहणास्थिरीकरणादयस्ते तु । अनुस्वारोऽलाक्षणिकः ॥ समा-

नधार्मिको हि सम्यग्दृष्टेः साधुः साध्वी श्रावकः श्राविका च। एतेषां कुशलमार्गप्रवृत्तानामुपबृंहणा कर्तव्या। धन्यस्त्वं पुण्यभाक्त्वं कर्तव्यमेतद्यद्भवतारब्धमिति। तद्भाव उपबृंहितव्यः। अनुपबृंहणेऽतिचारः। एव सद्धर्मानुष्ठाने विषीदन् * धर्म एव स्थिरीकर्तव्यः। अकरणेऽतिचारः। आदिशब्दात्समानधार्मिकवात्सल्यतीर्थप्रभावनापरिग्रहः। समानधार्मिकस्य ह्यापद्गतोद्धरणादिना वात्सल्यं कर्तव्यं। तदकरणेऽतिचारः। एवं स्वशक्त्या धर्मकथादिभिः प्रवचने प्रभावना कार्या। तदकरणेऽतिचार इति॥ तथा चाह—

नो खलु अप्परिवडिए निच्छयओ मइलिएव सम्मत्ते
होइ तओ परिणामो जत्तो णुववूहणाईया ॥९५॥

[ न खल्वप्रतिपतिते निश्चयतो मलिनीकृते वा सम्यक्त्वे।
भवति तकः परिणामो यतोऽनुपबृंहणादयः ॥९५॥ ]

न खल्विति नैव अप्रतिपतितेऽनपगते निश्चयतो निश्चयनयमतेन मलिनीकृते वा व्यवहारनयमतेन सम्यक्त्वे उक्तलक्षणे भवति तकः परिणामो जायते भावात्मस्वभावः यतो यस्मात्परिणामादनुपबृंहणादयो भवन्तीति। उक्ताः सम्यक्त्वातिचाराः। एते मुमुक्षुणा वर्जनीयाः। किमिति—

* प्रमादन.

जं साइयारमेयं खिप्पं नो मुक्खसाहगं भणिअं।
तम्हा मुक्खट्ठी खलु वज्जिज्ज इमे अईयारे।९६।

[ यत्सातिचारमेतत्क्षिप्रं न मोक्षसाधकं भणितम्।
तस्मात् मोक्षार्थी खलु वर्जयेदेतानतिचारान् ॥९६॥ ]

यद्यस्मात्सातिचारं सदोषमेतत्सम्यक्त्वं क्षिप्रं शीघ्रं न मोक्षसाधकं नापवर्गनिर्वर्तकं भणितं तीर्थकरगणधरैः निरतिचारस्यैव विशिष्टकर्मक्षयहेतुत्वात्तस्मात् मोक्षार्थी अपवर्गार्थी खल्विति खलुशब्दोऽवधारणे मोक्षार्थ्येव वर्जयेन्न कुर्यादेतानतिचारान् शङ्कादीनिति ॥

आह सुहे परिणामे पइसमयं कम्मखवणओ कह णु।
होइ तह संकिलेसो जत्तो एए अईयारा ॥९७॥

[ आह शुभे परिणामे प्रतिसमयं कर्मक्षपणतः कथं नु।
भवति तथा संक्लेशो यत एतेऽतिचाराः ॥९७॥ ]

एवं सातिचारे सम्यक्त्वे उक्ते सति पर आह। शुभे परिणामे सम्यक्त्वे सति प्रशमसंवेगादिलक्षणे प्रतिसमयं समयं समयं प्रति कर्मक्षपणतः विशिष्टकर्मक्षपणात् मिथ्यादृष्टेः सकाशात्सम्यग्दृष्टिर्विशिष्टकर्मक्षपणक एवेत्युक्तं कथ केन प्रकारेण नु इति क्षेपे भवति तथा संक्लेशो जायते चित्तविभ्रमः यतो यस्मात्संक्लेशादेते शंकादयोऽतिचारा भवन्ति

ततश्चानुत्थानमेवैतेषामिति पराभिप्रायः । अत्र गुरुर्भणति—

**नाणावरणादुदया तिव्वविवागा उ भंसणा तेसिं ।**
**सम्मत्तपुग्गलाणं तहासहावाउ किं न भवे ॥९८॥**

[ ज्ञानावरणाद्युदयात्तीव्रविपाकात्तु भ्रंशना तेषाम् ।
सम्यक्त्वपुद्गलानां तथास्वभावत्वात् किं न भवति ॥९८॥]

ज्ञानावरणाद्युदयात्किंविशिष्टात्तीव्रविपाकात्, न तु मंद-विपाकात्तस्मिन् सत्यपि अतिचारानुपपत्तेः सम्यग्दर्शनिनामपि मन्दविपाकस्य तस्य उदयात्, अतस्तीव्रानुभावादेव भ्रंशना स्वस्वभावच्युतिरूपा तेषां सम्यक्त्वपुद्गलानां तथास्वभावत्वा-न्मिथ्यात्वदलिकत्वात् जायत इति वाक्यशेषः अतः किं न भवत्यसौ संक्लेशो यत एतेऽतिचारा भवन्त्येवेत्यभिप्रायः ॥ उक्तं च प्रज्ञोपनायां कर्मप्रकृतिपदे बन्धचिन्तायां "कहन्नं भंते जीवे अट्ठकम्मप्पगडीउ बंधइ गोयमा णाणावरणिज्जस्स कम्मस्स उदएणं दंसणावरणिज्जं कम्मं नियच्छइ दंसणावर-णिज्जस्स कम्मस्स उदयेणं दंसणमोहणिज्जं कम्मं नियच्छइ दंसणमोहणिज्जस्स कम्मस्स उदएणं मिच्छत्तं णियच्छइ मिच्छत्तेणं उदिन्नेणं एवं खलु जीवे अट्ठकम्मपगडीउ बंधइत्ति"। तत्र

**नेगंतेणं चिय जे तदुदयभेया कुणंति ते मिच्छं ।**
**तत्तो हुंतिऽइयारा वज्जेयव्वा पयत्तेणं ॥९९॥**

[ नैकान्तेनैव ये तदुदयभेदाः कुर्वन्ति तान् मिथ्यात्वम् ।
ततो भवन्त्यतिचारा वर्जयितव्याः प्रयत्नेन ॥९९॥ ]

नैकान्तेनैव न सर्वथैव ये तदुदयभेदा ज्ञानावरणाद्युदय-प्रकाराः कुर्वन्ति तान् सम्यक्त्वपुद्गलान् मिथ्यात्वं अपि तु भ्रंशनामात्रमेव ततस्मात् ज्ञानावरणाद्युदयाद्भवन्त्यतिचाराः शङ्कादयः ते च वर्जयितव्याः प्रयत्नेनेति ॥

**जे नियमवेयणिज्जस्स उदयओ होन्ति तह कहं तेउ।
वज्जिज्जंति इह खलु, सुद्धेणं जीववीरिएणं १००**

[ ये नियमवेदनीयस्योदयतो भवन्ति तथा कथं पुनस्ते ।
वर्जन्ते इह खलु शुद्धेन जीववीर्येण ॥ १०० ॥ ]

स्यादेतत् ये शङ्कादयो नियमवेदनीस्य ज्ञानावरणादेरुदयतो भवन्ति, तथा तेन प्रकारेण कथं पुनस्ते वर्जन्ते इह प्रक्रमे प्रस्तावे खलुशब्दादन्यत्रापि चारित्रादौ तत्कर्मणो अफलत्वप्र-सङ्गात्, इनि आशङ्कयाह, शुद्धेन जीववीर्येण, कथंचित्प्रादु-र्भूतेन प्रशस्तेनात्मपरिणामेनेति ॥ अमुमेवार्थं समर्थयन्नाह—

**कत्थइ जीवो बलीओ, कत्थइ कम्माइ हुंति बलियाइं
जम्हा णंता सिद्धा, चिट्ठंति भवंमि वि अणंता १०१**

[ क्वचित् जीवो बलीकः क्वचित्कर्माणि भवन्ति बलवन्ति ।
यस्मादनन्ताः सिद्धाः तिष्ठन्ति भवेऽप्यनन्ताः ॥१०१॥ ]

क्वचिज्जीवो बली स्ववीर्यतः कुलिष्टकर्माभिभवेन सम्य-ग्दर्शनाद्यवासया अनन्तानां सिद्धत्वश्रवणात्, क्वचित्कर्माणि भवन्ति बलवन्ति यस्मादेवं वीर्यवन्तोऽपि ततोऽनन्तगुणाः कर्मानुभावतः संसार एव तिष्ठन्ति प्राणिन इति, तथा चाह, यस्मादनन्ताः सिद्धास्तिष्ठन्ति भवेऽप्यनन्ता इति एतदेव प्रकटयति ।

अच्चंतदारुणाइं कम्माइं खवित्तु जीवविरिएणं ।
सिद्धिमणंत्ता सत्ता पत्ता जिणवयणजणिएणं १०२

[ अत्यन्तदारुणानि कर्माणि क्षपयित्वा जीववीर्येण ।
सिद्धिमनन्ताः सत्वाः प्राप्ता जिनवचनजनितेन ॥१०२॥ ]

अत्यन्तदारुणानि कुलिष्टविपाकानि कर्माणि ज्ञानावरणा-दीनि क्षपयित्वा जीववीर्येण प्रलयं नीत्वा शुभात्मपरिणामेन सिद्धिं मुक्तिं अनन्ताः सत्त्वाःप्राप्ताःजिनवचनजनितेन जीववीर्येण, इह वैराग्यहेतुः सर्वमेव वचनं जिनवचनमुच्यत इति ।

तत्तो णंतगुणा खलु कम्मेण विणिज्जिआ इह अडंति ।
सारीरमाणसाणं दुक्खाणं पारमलहंता ॥१०३॥

[ ततो ऽनन्तगुणाः खलु कर्मणा विनिर्जिता इह अटन्ति ।
शारीरमानसानां दुःखानां पारमलभमानाः ॥१०३॥ ]

ततः सिद्धिमुपगतेभ्यः सकाशादनन्तगुणा एव कर्मणा

विनिर्जिताः सन्त इह संसारेऽटन्ति, यस्मादनादिमतापि कालेनैकस्य निगोदस्यानन्तभागः सिद्धः असङ्ख्येयाश्च निगोदा इति, कथमटन्तीत्यत्राह ॥ शारीरमानसानां दुःखानां पारम-लभमानाः, तत्र शारीराणि ज्वरकुष्ठादीनि, मानसानीष्टवि-योगादीनि,* उपसंहरन्नाह ॥

तम्हा निच्चसईए बहुमाणेणं च अहिगयगुणंमि ।
पडिवक्खदुगंच्छाए परिणइ आलोयणेणं च १०४

[ तस्मान्नित्यस्मृत्या बहुमानेन चाधिकृतगुणे ।
प्रतिपक्षजुगुप्सया परिणत्यालोचनेन च ॥ १०४ ॥ ]

यस्मादेवं तस्मान्नित्यस्मृत्या सदा अविस्मरणेन बहुमा-नेन च भावप्रतिबन्धेन चाधिकृतगुणे सम्यक्त्वादौ तथा प्रतिपक्षजुगुप्सया मिथ्यात्वाद्युद्वेगेन, परिणत्यालोचनेन च तेषामेव मिथ्यात्वादीनां दारुणफला एते इति विपाकालोच-नेन चेति ॥

तीत्थंकरभत्तीए, सुसाहुजणपज्जुवासणाए य ।
उत्तरगुणसद्धाए, अपमाओ होइ कायव्वो ।१०५।

[ तीर्थकरभक्त्या सुसाधुजनपर्युपासनया च ।
उत्तरगुणश्रद्धयाप्रमादो भवति कर्तव्यः ॥ १०५ ॥ ]

तथा तीर्थंकरभक्तया परमगुरुविनयेन, सुसाधुजनपर्युपा-

---

* मानसानि प्रियविप्रयोगादीनि ।

सनया च भावसाधुसेवनया, तथोत्तरगुणश्रद्धया च सम्यक्त्वे सत्यणुव्रताभिलाषेण तेषु सत्सु महाव्रताभिलाषेणेति भावः, एवमेतेन प्रकारेणाप्रमादो भवति कर्तव्य एवमप्रमादवान्नियम-वेदनीयस्यापि कर्मणोऽपनयति शक्तिमित्येष शुद्धस्य जीव-वीर्यस्य करणे उपाय इति ॥

सांप्रतं द्वादशप्रकारं श्रावकधर्ममुपन्यस्यता यदुक्तं पञ्चा-णुव्रतादीनीति तान्यभिधित्सुराह—

पंच उ अणुव्वयाइं थूलगपाणिवहविरमणाईणि ।
तत्थ पढमं इमं खलु पन्नत्तं वीयरागेहिं ।१०६।

[ पञ्च त्वणुव्रतानि स्थूलप्राणवधविरमणादीनि ।
तत्र प्रथमं इदं खलु प्रज्ञप्तं वीतरागैः ॥ १०६ ॥ ]

पञ्च त्वणुव्रतानि, तुरेवकारार्थः, पञ्चैव, अणुत्वमेषां सर्ववि-रतिलक्षणमहाव्रतापेक्षया, तथा चाह, स्थूरप्राणवधविरमणादीनि स्थूरकप्राणिप्राणवधविरमणमादिशब्दात्स्थूरमृषावादादिपरिग्रहः, तत्र तेष्वणुव्रतेषु प्रथममाद्यमिदं खल्विति इदमेव वक्ष्यमाणल-क्षणं, शेषाणामस्यैव वस्तुत उत्तरगुणत्वात्, प्रज्ञप्तं वीतरागैः प्ररूपितमर्हद्भिरिति ॥

थूलगपाणिवहस्साविरई, दुविहो अ सो वहो होइ ।
संकप्पारंभेहि य, वज्जइ संकप्पओ विहिणा ॥१०७॥

[ स्थूरप्राणवधस्य विरतिः द्विविधश्चासौ वधो भवति।
संकल्पारम्भाभ्यां वर्जयति संकल्पतः विधिना ॥१०७॥ ]

स्थूरकप्राणवधस्य विरतिः, स्थूरा एव स्थूरका द्वीन्द्रियादयस्तेषां प्राणाः शरीरेन्द्रियोच्छ्वासायुर्बललक्षणास्तेषां वधः जिघांसनं तस्य विरतिर्निवृत्तिरित्यर्थः, द्विविधश्चासौ वधो भवति, कथं संकल्पारम्भाभ्यां, तत्र व्यापादनाभिसंधिः संकल्पः, कृष्यादिकस्त्वारम्भः, तत्र वर्जयति संकल्पतः, परिहरति असौ श्रावकः प्राणवधं संकल्पेन, न त्वारम्भतोऽपि, तत्र नियमात् प्रवृत्तेः, विधिना प्रवचनोक्तेन वर्जयति नतु यथाकथंचिदिति, स चायं विधिः ॥

उवउत्तो गुरुमूले संविग्गो इत्तरं व इयरं वा।
अणुदियहमणुसरंतो पालेइ विसुद्धपरिणामो ॥१०८॥

[ उपयुक्तो गुरुमूले संविग्नो इत्वरं इतरद्वा।
अनुदिवसमनुस्मरन् पालयति विशुद्धपरिणामः ॥१०८॥ ]

उपयुक्तोऽन्तःकरणेन समाहितो, गुरुमूले आचार्यसन्निधौ, संविग्नो मोक्षसुखाभिलाषी न तु ऋद्धिकाम इत्वरं चातुर्मासादिकालावधिना.* इतरद्वा यावत्कथिकमेव, प्राणवधं वर्जयतीति वर्तते, एवं वर्जयित्वानुदिवसमनुस्मरन्, स्मृतिमूलो धर्म इति कृत्वा, पालयति विशुद्धपरिणामः, न पुनस्तत्र चेतसापि प्रवर्तत इति ॥

---

* कालं विधिना

अत्राह

देसविरइपरिणामे सइ किं गुरुणा फलस्स भावाओ।
उभयपलिमंथदोसो निरत्थओ मोहलिंगं तु ॥१०९॥

[ देशविरतिपरिणामे सति किं गुरुणा फलस्याभावात्।
उभयपलिमन्थदोषः निरर्थको मोहलिंगं तु ॥१०९॥ ]

इह श्रावको यदाणुव्रतं प्रतिपद्यते तदास्य देशविरतिपरिणामः स्याद्वा न वा किं चात उभयथापि दोषः तमेवाह देशविरतिपरिणामे सति, स्वत एव तथाविधाणुव्रतरूपाध्यवसाये सति, किं गुरुणा, किमाचार्येण यत्संनिधौ तद्गृह्यते कुतः फलस्याभावात्तत्संनिधावपि प्रतिपत्तुः स एव फललाभः स च स्वत एव संजात इत्यफला गुरुमार्गणा किं च उभयपलिमन्थदोषः तथाविधाणुव्रतरूपाध्यवसाये सत्येव गुरुसंनिधौ तत्प्रतिपत्त्यभ्युपगमे उभयोराचार्यशिष्ययोर्मुधाव्यापारदोषः स च निरर्थको मोहलिंग एव न हि अमूढस्य प्रयोजनमन्तरेण प्रवृत्तिरिति ॥ द्वितीयं विकल्पमुररीकृत्याह।

दुन्हवि य मुसावाओ तयभावे पालणस्स वि अभावो।
न य परिणामेण विणा इच्छिज्जइ पालणं समए ११०

[ द्वयोरपि मृषावादः तदभावे पालनस्याप्यभावः।
न च परिणामेन विना इष्यते पालनं समये ।११०। ]

यदि न देशविरतिपरिणाम एव तर्हि द्वयोरपि प्रतिपत्तृप्रतिपादकयोः शिष्याचार्ययोः मृषावादः शिष्यस्यासदभ्युपगमाद्गुरोश्चासदभिधानादिति किं च तदभावे देशविरतिपरिणामस्याभावे पालनस्यापि व्रतसंरक्षणस्याप्यभावः एतदेव स्पष्टयति न च नैव परिणामेनानन्तरोदितेन विना इष्यतेऽभ्युपगम्यते पालनं संरक्षणं, व्रतस्येति प्रक्रमाद्गम्यते, समये सिद्धान्ते, परमार्थेन तस्यैव व्रतत्वादिति। एवं पराभिप्रायमाशङ्क्य, पक्षद्वयेऽप्यदोष इत्यावेदयन्नाह।

संते विय परिणामे गुरुमूलपवज्जणंमि एस गुणो।
दढया आणाकरणं कम्मखओवसमवुड्ढी य।१११।

[ सत्यपि च परिणामे गुरुमूलप्रतिपादने एष गुणः।
दृढता आज्ञाकरणं कर्मक्षयोपशमवृद्धिश्च ॥ १११ ॥ ]

सत्यपि च परिणामे देशविरतिरूपे, गुरुमूलप्रतिपादने आचार्यसन्निधौ प्रतिपत्तिकरणे, एष गुण एषोऽभ्युच्चयः यदुत दृढता तस्मिन्नेव गुणे दार्ढ्यं, तथाज्ञाकरणं अर्हदाज्ञासंपादनं, यतस्तस्यैष उपदेशो गुरुसन्निधौ व्रतग्रहणं कार्यमिति, तथा कर्मक्षयोपशमवृद्धिश्च तथाकरणे दार्ढ्याज्ञासंपादनशुभपरिणामतः अधिकतरक्षयोपशमोपपत्तेरिति ॥

इय अहिए फलभावे न होइ उभयपलिमंथदोसो उ।
तयभावम्मि वि दुन्हवि न मुसावाओवि गुणभावा॥

[ इय अधिके फलभावे न भवति उभयपलिमन्थदोषः ।
तदभावेऽपि द्वयोरपि न मृषावादोऽपि गुणभावात् ११२ ]

इय एवमधिके फलभावे पूर्वावस्थातः अभ्यधिकतरायां फलसत्तायां, न भवति न जायते, उभयपलिमन्थदोषः शिष्याचार्ययोर्मुधाव्यापारदोष इत्यर्थः । एवं परिहृतः प्रथमो विकल्पः ॥ द्वितीयमधिकृत्याह । तदभावेऽपि देशविरतिपरिणामाभावेऽपि, द्वयोरपि प्रत्याख्यातृप्रत्याख्यापयित्रोर्गुरुशिष्ययोर्न मृषावादोऽपि प्राक्चोदितः कुतो गुणभावाद्गुणसंभवादिति । गुणभावमेवाह ॥

**तग्गणउ चिय तओ जायइ कालेण असठभावस्स ।
इयरस्स न देयं चिय सुद्धो छलिओ वि जइ असढो**

[ तद्ग्रहणत एव तको जायते कालेनाशठभावस्य ।
इतरस्य न देयमेव शुद्धः छलितो ऽपि यतिरशठः ११३ ]

तद्ग्रहणत एव विधिना गुरुसन्निधौ व्रतग्रहणादेव तको जायते कालेन असौ देशविरतिपरिणामो भवति कालेन तत् गुरुसन्निधिकारणत्वादित्यर्थः* । किंविशिष्टस्य अशठभावस्य श्राद्धस्य सत्त्वस्य शठविषयं दोषमाशङ्क्याह, इतरस्य शठस्य न देयमेव, व्रतं अस्थानदाने भगवदाशातनाप्रसङ्गात्, तदज्ञानविषयं दोषमाशङ्क्याह, शुद्धः छलितोऽपि यतिरशठः छद्मस्थप्रत्यपेक्षणया कृतयत्नो, मायाविना कथंचिद्व्यंसितोऽपि

* तत्कारणत्वादित्यर्थ

विप्रतारितोऽप्यार्जव: साधुरदोषवानेव, आज्ञानतिक्रमादिति ॥

अपरस्त्वाह—

**थूलगपाणाइवायं पच्चक्खंतस्स कह न इयरंमि ।**
**होइ णुमइ जइस्स वि तिविहेण तिदंडविरयस्स ॥**

[ स्थूरकप्राणातिपातं प्रत्याचक्षाणस्य कथं नेतरस्मिन् ।
भवत्यनुमतिर्यतेः त्रिविधेन त्रिदण्डविरतस्य ॥११४॥ ]

स्थूरकप्राणातिपातं द्वीन्द्रियादिप्राणजिघांसनं प्रत्याचक्षाणस्य तद्विषयां निवृत्तिं कारयतः कथं नेतरस्मिन् कथं न सूक्ष्मप्राणातिपाते भवत्यनुमतिर्यतेर्भवत्येवेत्यभिप्रायः, किंविशिष्टस्य यतेस्त्रिविधेन त्रिदण्डविरतस्य मनसा वाचा कायेन सावद्यं प्रति कृतकारितानुमतिविरतस्य, तथा चान्यत्रापि निषिद्ध एव यतेरेवं जातीयोऽर्थः, यत उक्तं " माणुमती केग्सा तुम्हे " त्ति ॥ अत्र गुरुराह—

**अविहीए होइ च्चिय विहीइ नो सुयविसुद्धभावस्स ।**
**गाहावइसुअचोरग्गहणमोअणा इत्थ नायं तु ११५**

[ अविधिना भवत्येव विधिना न श्रुतविशुद्धभावस्य ।
गृहपतिसुतचोरग्रहणमोचनं अत्र ज्ञातं तु ॥ ११५ ॥ ]

अविधिना भवत्येव अणुव्रतग्रहणकाले सम्यगनाख्याय

संसारासारताख्यापनपुरःसरं साधुधर्मं प्रमादतोऽणुव्रतानि यच्छतो भवत्येवानुमतिः, विधिना पुनः साधुधर्मकथनपुरः-सरेण नेति न भवत्यनुमतिः, किंविशिष्टस्य श्रुतविशुद्धभावस्य तत्त्वज्ञानान्मध्यस्थस्येत्यर्थः, अस्मिन्नेवार्थे दृष्टान्तमाह, गृहप-तिसुतचोरग्रहणमोचना अत्र ज्ञातमिह उदाहरणमित्यर्थः, तच्चेदं—

वंसतउरं नगरं, जियसत्तू राया धारिणी देवी दणट्टा तिसएण परितुट्ठो से भत्ता, भणिया य णेण, भण किं ते पियं कीरउ, तीए भणियं, कोमुदीए अंतेउराणं जहिच्छा पयारेण निसि ऊस्सवपसाउत्ति । पडिसुयमणेण । समागओ सा दियहो । कारावियं च अणेण घोसणं, जहा जो एत्थ अज्ज पुरिसो वसिही तस्स मए सारीरो णिग्गहो कायव्वो, उग्गदंडो य रायत्ति । ततो णिग्गया सव्वे पुरिसा णवरमे-गस्स सेट्ठिणो छ पुत्ता संववहारवावडयाए लहु ण णिग्गया । ढक्किया पओलिओ । भएण तत्थेव, खुसिया, वत्तो रयणी-ऊसवो । बीयदिवहे य पउत्ता चारिया गवेसह को ण णिग्ग-उत्ति । तेहिं निउणबुद्धीए गवेसिऊण साहियं रन्नो, अमुग-सेट्ठिस्स छसुया ण णिग्गयत्ति । कुविओ राया भणियं चाणेण वावाएह ते दुरायारे । गहियो ते रायपुरिसेहिं । एयं वायं णिऊण णरवईसमीवं समागओ तेसिं पिया । विन्नतो य णेण राया देव खमसु एगमवराहं, मुयह एक्क-

वारं मम एए। मा अन्नो वि एवं काहित्ति ण मुयई राया। पुणो पुणो भन्नमाणेण मा कुलक्खओ भवउत्ति मुक्को से जेट्ठ-पुत्तो, वावाइया इयरे। ण य समभावस्स सव्वपुत्तेसु सेट्ठिस्स सेसवावायणेसु अणुमई त्ति ॥ एस दिट्ठंतो इमो एयस्स उवणओ। रायातुल्लो सावगो, वावाइज्जमाणवणियतुल्ला जीवणिकाया, पियतुल्लो साहू, विन्नवणतुल्ला अणुवयगहणकाले साधुधम्मदेसणा। एवं च असुयणे वि सावगस्स ण साधुस्स दोसो ॥

न चैतत्स्वमनीषिकया परिकल्पितं उक्तं च सूत्रकृताङ्गे "गाहावइसुयचोरग्गहणविमोक्खणयाए त्ति' एतत्संग्राहकं चेदं गाथात्रयम्-

देवीतुट्ठो राया ओरोहस्स निसि ऊसवपसाओ।
घोसणनरनिग्गमणं छव्वणियसुयाणनिक्खेवो ११६

[ देव्यै तुष्टो राजा अन्तःपुरस्य निशि उत्सवप्रसादः।
घोषणनरनिर्गमनं षड्वणिक्सुतानामनिक्षेपः ॥११६॥ ]

चारियकहिए वज्झा मोएइ पिया न मिल्लइ राया।
जिट्ठमुयणे समस्स उ नाणुमई तस्स सेसेसु ।११७।

[ चारिककथिते वध्या मोचयति पिता न मुञ्चति राजा।
ज्येष्ठमोचने समस्य तु नानुमतिः तस्य शेषेषु ॥११७॥ ]

राया सड्ढो वणिया काया साहू य तेसि पियतुल्लो।
मोयइ अविसेसेणं न मुयइ सो तस्स किं इत्थ ।११८।

[ राजा श्राद्धः वणिक्पुत्राः कायाः साधुश्च तेषां पितृतुल्यः ।
मोचयति अविशेषेण न मुञ्चति स तस्य किमत्र ॥११८॥]

एतद्गतार्थमिति न व्याख्यायते णवरमोरोहो अंतेउरं भण्णइ ॥

सांप्रतमन्यद्वादस्थानकं—

**तसपाणघायविरई तत्तो थावरगयाण वहभावा ।**
**नागरगवहनिवित्तीनायाओ केइ नेच्छंति ।११९।**

[ त्रसप्राणघातविरतिं ततः स्थावरगतानां वधभावात् ।
नागरकवधनिवृत्तिज्ञाततो केचन नेच्छन्ति ॥११९॥ ]

त्रसप्राणघातविरतिं द्वीन्द्रियादिप्राणव्यापत्ति*निवृतिं ततस्तस्मात्त्रसकायात् स्थावरगतानां पृथिव्यादिसमुत्पन्नानां वधभावाद्व्यापत्तिसंभवान्नागरकवधनिवृत्तिज्ञाततो नागरकवधनिवृत्त्युदाहरणेन केचन वादिनो नेच्छन्ति नाभ्युपगच्छन्तीति गाथाक्षरार्थः, भावार्थं त्वाह—

**पच्चक्खायंमि इहं नागरगवहम्मि निग्गयं पि तओ ।**
**तं वहमाणस्स न किं जायइ वहविरइभंगो उ ।१२०।**

[ प्रत्याख्याते इह नागरकवधे निर्गतमपि ततः ।
तं घ्नतो न किं जायते वधविरतिभङ्गः ॥ १२० ॥ ]

---

* प्राणातिपात०

प्रत्याख्याते इह परित्यक्ते अत्र कस्मिन्नागरकजिघांसने निर्गतमपि निःक्रान्तमपि ततो नगरात् तं नागरकं घ्नतो व्यापादयतोऽन्यत्रापि न किं जायते वधविरतिभङ्गः प्रत्याख्यानभङ्गो जायत एवेति। इत्थं दृष्टान्तमभिधाय अधुना दार्ष्टान्तिकयोजनां कुर्वन्नाह—

इय अविसेसा तसपाणघायविरइं काउ तं तत्तो।
थावरकायमणुगयं वहमाणस्स धुवो भंगो।१२१।

[ इय अविशेषात् त्रसप्राणघातविरतिं कृत्वा तं ततः।
स्थावरकायमनुगतं घ्नतो ध्रुवो भङ्गः ॥ १२१ ॥ ]

इय एवमविशेषात्सामान्येनैव त्रसप्राणघातविरतिमपि कृत्वा तं त्रसं ततस्त्रसकायात् द्वीन्द्रियादिलक्षणात् स्थावरकायमनुगतं विचित्रकर्मपरिणामात्पश्चात्पृथिव्यादिषूत्पन्नं घ्नतो व्यापादयतो ध्रुवो भङ्गोऽवश्यमेव भङ्गो निवृत्तेरिति। संभवति चैतद्यत्त्रसोऽपि मृत्वा श्रावकारम्भविषये स्थावरः प्रत्यागच्छति स च तं व्यापादयतीति ततश्च विशेष्यप्रत्याख्यानं कर्तव्यमनवद्यत्वादिति। आह च—

तसभूयपाणविरई तब्भावंमि वि न होइ भंगाय।
खीरविगइपच्चक्खाणे दहियपरिभोगकिरिय व्व।१२२।

[ त्रसभूतप्राणविरतिः तद्भावेऽपि न भवति भङ्गाय।
क्षीरविकृतिप्रत्याख्यातृदधिपरिभोगक्रियावत् ॥१२२॥ ]

त्रसभूतप्राणविरतिस्त्रसपर्यायाध्यासितप्राणवधनिवृत्तिः तद्-भावेऽपि स्थावरगतव्यापत्तिभावेऽपि न भवति प्रत्याख्यान-भङ्गाय विशेष्यकृतत्वात् किंवत् क्षीरविकृतिप्रत्याख्यातृदधिप-रिभोगक्रियावत् न हि क्षीरविकृतिप्रत्याख्यातुर्दधिपरिभो-गक्रिया प्रत्याख्यानभङ्गाय क्षीरस्यैव दधिरूपत्वापत्तावपि विशेष्यप्रत्याख्यानादिति× ॥ उपसंहरन्नाह—

**तम्हा विसेसिऊणं इय विरई इत्थ होइ कायव्वा ।**
**अब्भक्खाणं दुन्ह वि इय करणे नावगच्छंति ।१२३।**

[ तस्माद्विशिष्य इय विरतिरत्र भवति कर्तव्या ।
अभ्याख्यानं द्वयोरपि इयकरणे नावगच्छन्ति ॥१२३॥ ]

यस्मादेवं तस्माद्विशिष्य भूतशब्दोपादानेन इय एवं विरतिर्निवृत्तिरत्र प्राणातिपाते भवति कर्तव्या अन्यथा भङ्गप्र-सङ्गात् । इति पूर्वपक्षः । अत्रोत्तरमाह । अभ्याख्यानं तद्गु-णशून्यत्वेऽपि तद्गुणाभ्युपगमलक्षणं द्वयोरपि प्रत्याख्यातृप्रत्या-ख्यापयित्रोराचार्यश्रावकयोः इयकरणे भूतशब्दसमन्वितप्रत्या-ख्यानासेवने नावगच्छन्ति नावबुध्यन्ते पूर्वपक्षवादिन इति ॥ तथा चाह—

**ओवंमे तादत्थे व हुज्ज एसित्थ भूयसद्दो त्ति ।**
**उभओ पओगकरणं न संगयं समयनीईए १२४**

---

× प्रत्याख्यातत्वादिति

[ औपम्ये तादर्थ्ये वा भवेदेषोऽत्र भूतशब्द इति।
उभयथा प्रयोगकरणं न संगतं समयनीत्या ॥१२४॥ ]

औपम्ये तादर्थ्ये वा भवेदेषोऽत्र प्रत्याख्यानविधौ भूतशब्द इति। उभयथापि प्रयोगकरणमस्य न संगतं समयनीत्या सिद्धान्तव्यवस्थयेति+ गाथाक्षरार्थः ॥ भावार्थमाह—

ओवमे देसो खलु एसो सुरलोयभूय मो एत्थ।
देसु च्चिय सुरलोगो न होइ एवं तसा तेवि ।१२५।

[ औपम्ये देशः खल्वेष सुरलोकभूत एव अत्र।
देश एव सुरलोको न भवति एवं त्रसास्तेऽपि ॥१२५॥ ]

औपम्ये उपमाभावे भूतशब्दप्रयोगो यथा देशः खल्वेष लाटदेशादिः ऋद्ध्यादिगुणोपेतत्वात्सुरलोकोपमः मो इत्यवधारणार्थो निपातः सुरलोकभूत एव अत्रास्मिन् पक्षे देश एव सुरलोको न भवति तेनोपमीयमानत्वाद्देशस्य एवं त्रसास्तेऽपि यद्विषया निवृत्तिः क्रियते तेऽपि त्रसा न भवन्ति त्रसभूतत्वात्त्रसैरुपमीयमानत्वादिति। ततः किमित्याह—

अतसवहनिवित्तीए थावरघाए वि पावए तस्स।
वहविरइभंगदोसो अतसत्ता थावराणं तु ।१२६।

---

+ व्यवस्थित्येति

[ अत्रसवधनिवृत्तौ स्थावरघातेऽपि प्राप्नोति तस्य ।
वधविरतिभङ्गदोषो ऽत्रसत्वात्स्थावराणां तु ॥१२६॥ ]

उक्तन्यायादत्रसवधनिवृत्तौ सत्यां स्थावरवधेऽपि कृते प्राप्नोति तस्य निवृत्तिकर्तुर्वधविरतिभङ्गदोषः, कुतः अत्रसत्वात्स्थावराणामेव अत्रसाश्च त्रसभूता भवन्तीति अवसितः औपम्यपक्षः । सांप्रतं तादर्थ्यपक्षमाह—

**तादत्थे पुण एसो सीईभूयमुदगंति निद्दिट्ठो ।**
**तज्जाइअणुच्छेया न य सो तसथावराणं तु ।१२७।**

[ तादर्थ्ये पुनरेष शीतीभूतमुदकमिति निर्दिष्टः ।
तज्जात्यनुच्छेदात् न चासौ त्रसस्थावरयोस्तु ॥१२७॥ ]

तादर्थ्ये पुनस्तदर्थभावे पुनरेष भूतशब्दप्रयोगः शीतीभूतमुदकमुष्णं सत्पर्यायान्तरमापन्नमिति निर्दिष्टस्तल्लक्षणज्ञैः एवं प्रतिपादितः तज्जात्यनुच्छेदात् अत्रापि तदुदकजात्यनुच्छेदेनैवोष्णं सच्छीतीभूतं न चासौ जात्यनुच्छेदस्त्रसस्थावरयोर्भिन्नजातित्वादिति ॥

**सिय जीवजाइमहिगिच्च अत्थि किंतीइ अपडिकुट्ठाए**
**भूअगहणेवि एवं दोसो अणिवारणिज्जो ओ ।१२८।**

[ स्याज्जीवजातिमधिकृत्यास्ति किं तया अप्रतिकुष्टया ।
भूतग्रहणेऽप्येवं दोषोऽनिवारणीय एव ॥ १२८ ॥ ]

स्याज्जीवजातिमधिकृत्यास्ति जात्यनुच्छेदः द्वयोरपि जीवत्वानुच्छेदादित्याशङ्कयाह किं तया जीवजात्या अप्रतिकुष्टया अनिषिद्धया न तेन जीवजातिवधविरतिः कृता येन सा चिन्त्यते ततश्च भूतग्रहणेऽप्येवमुक्तन्यायात् दोषोऽनिवारणीय एवेति, किं च—

तसभूयावि तसच्चिय जं ता किं भूयसद्दगहणेणं।
तब्भावओ अ सिद्धे हंत विसेसत्थभावम्मि।१२९।

[ त्रसभूता अपि त्रसा एव यत्तत्किं भूतशब्दग्रहणेन।
तद्भावत एव सिद्धे हंत विशेषार्थभावे ॥ १२९ ॥ ]

त्रसभूता अपि वस्तुस्थित्या त्रसा एव नान्ये यद्यस्मादेवं तत्तस्मात्किं भूतशब्दग्रहणेन न किंचिदित्यर्थः, तद्भावत एव त्रसभावत एव सिद्धे हन्त विशेषार्थभावे त्रसपर्यायलक्षणे, न हि त्रसपर्यायशून्यस्य त्रसत्वमिति ॥ किं च—

थावरसंभारकडेण कम्मणा जं च थावरा भणिया।
इयरेणं तु तसा खलु इत्तो च्चिय तेसि भेओउ।१३०।

[ स्थावरसंभारकृतेन कर्मणा यच्च स्थावरा भणिताः।
इतरेण तु त्रसाः खलु अत एव तयोर्भेदः ॥१३०॥ ]

स्थावरसंभारकृतेन पृथिव्यादिनिचयनिवर्तितेन कर्मणा यच्च यस्माच्च स्थावरा भणिताः परममुनिभिरिति गम्यते इतरेण तु

त्रससंभारकृतेन तुरवधारणे त्रससंभारकृतेनैव त्रसाः खल्विति त्रसा एव खलुशब्दस्यावधारणार्थत्वात् अत एवास्मादेव निमित्त-भेदात्तयोस्त्रसस्थावरयोर्भेदः तस्मिन्सति अनर्थको भूतशब्द इति।

इदानीं दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमाह—

**नागरगंमि वि गामाइसंकमे अवगयंमि तब्भावे।**
**नत्थि हु वहे वि भंगो अणवगए किमिह गामेण १३१**

[ नागरकेऽपि ग्रामादिसंक्रमे अपगते तद्भावे।
नास्त्येव वधेऽपि भङ्गोऽनपगते किमिह ग्रामेण ॥१३१॥ ]

नागरकेऽपि दृष्टान्ततयोपन्यस्त इदं चिन्त्यते। ग्रामादि-संक्रमे तस्य किमसौ नागरकभावोऽपैति वा न वा। यद्यपैति ततो ग्रामादिसंक्रमे सति, अपगते तद्भावे नागरकभावे नास्त्येव वधेऽपि भङ्गः प्रत्याख्यानस्य तथाभिसन्धेः। अथ नापैत्यत्राह। अनपगते आपुरुषमभिसन्धिना अनिवृत्ते नागर-कभावे किमिह ग्रामेण तत्रापि वधविरतिविषयस्तथापुरुषभावा-निवृत्तेरिति—

**न य सइ तसभावंमि थावरकायगयं तु सो वहइ।**
**तम्हा अणायमेयं मुद्धमइविलोहणं नेयं ॥१३२॥**

[ न च सति त्रसभावे स्थावरकायगतमसौ हन्ति।
तस्मादज्ञातमेतत् मुग्धमतिविलोभनं ज्ञेयं ॥ १३२ ॥ ]

न च सति त्रसभावे नैव विद्यमान एव त्रसत्वे स्थावरकायगतमसौ हन्ति अपरित्यक्ते त्रसत्वे स्थावरकायगमनाभावात् तस्मादज्ञातमेतत् उक्तन्यायादनुदाहरणमेतत् मुग्धमतिविलोभनं ज्ञेयं ऋजुमतिविस्मयकरं ज्ञातव्यमिति ।

इदानीं अन्यद्वादस्थानकम् ।

अन्ने उ दुहियसत्ता संसारं परिअडंति पावेण ।
वावाएयव्वा खलु ते तक्खवणट्ठया बिंति ॥१३३॥

[ अन्ये तु दुःखितसत्त्वाः संसारं पर्यटन्ति पापेन ।
व्यापादयितव्याः खलु ते तत्क्षपणार्थं ब्रुवते ॥१३३॥ ]

अन्ये तु संसारमोचका ब्रुवत इति योगः । किं ब्रुवत इत्याह दुःखितसत्त्वाः कृमिपिपीलिकादयः संसारं पर्यटन्ति संसारमवगाहन्ते पापेनापुण्येन हेतुना यतश्चैवमतो व्यापादयितव्याः खलु ते खल्वित्यवधारणे व्यापादयितव्या एव ते दुःखितसत्त्वाः, किमर्थमित्याह, तत्क्षपणार्थं पापक्षपणनिमित्तमिति—

ता पाणवहनिवित्ती नो अविसेसेण होइ कायव्वा ।
अवि अ सुहिएसु अन्नह करणिज्जनिसेहणे दोसो ॥

[ तत्प्राणवधनिवृत्तिः नो अविशेषेण भवति कर्तव्या ।
अपि च सुखितेषु अन्यथा करणीयनिषेधने दोषः १३४ ]

यस्मादेवं तत्तस्मात्प्राणवधनिवृत्तिर्नाविशेषेण भवति कर्तव्या अपि च सुखितेषु सुखितविषये कर्तव्या तद्व्यापादन एव दोषसंभवादन्यथा यद्येवं न क्रियते ततः करणीयनिषेधने दोषः कर्तव्यो हि परलोकार्थिना दुःखितानां पापक्षयः तन्निवृत्तिकरणे प्रव्रज्यादिदाननिवृत्तिकरणवद्दोष इत्येष पूर्वपक्षः ॥ अत्रोत्तरमाह—

तहवहभावे पावक्खओ त्ति न उ अट्टज्झाणओ बंधो।
तेसिमिह किं पमाणं नारगनाओवगं वयणं ॥१३५॥

[ तथावधभावे पापक्षय इति न त्वार्तध्यानतो बन्धः ।
तेषामिह किं प्रमाणं नारकन्यायोपगं वचनम् ॥१३५॥ ]

तथा तेन प्रकारेण वधभावे व्यापत्तिकरणे पापक्षय एव न त्वार्तध्यानतो बन्धस्तेषां दुःखितानामपि किं प्रमाणं न किंचिदित्यर्थः, अत्राह, नारकन्यायोपगं वचनं नारकन्यायानुसारि वचनं प्रमाणमिति । एतदेव भावयति—

तेसिं वहिज्जमाण वि परमाहम्मिअसुरेहि अणवरयं।
रुद्दज्झाणगयाण वि न तहा बंधो जहा विगमो ॥

[ तेषां वध्यमानानामपि परमाधार्मिकसुरैरनवरतम् ।
रौद्रध्यानगतानामपि न तथा बन्धो यथा विगमः १३६ ]

तेषां नारकाणां वध्यमानानां हन्यमानानामपि कैः पर-

माधार्मिकसुरैरम्बादिभिरनवरतं सततं रौद्रध्यानगतानामपि न तथा बन्धो यथा विगमः कर्मणो दुःखानुभवादिति गाथार्थः।

कथमेतन्निश्चीयत इत्यत्राह।

**नरगाउबंधविरहा अणंतरं तंमि अणुववत्तीओ।**
**तदभावेवि य खवणं परुप्परं दुक्खकरणाओ।१३७।**

[ नरकायुर्बन्धविरहादनन्तरं तस्मिन्ननुत्पत्तेः।
तदभावेऽपि च क्षपणं परस्परं दुःखकरणात् ॥१३७॥ ]

नरकायुर्बन्धविरहात् न कदाचिन्नारको नरकायुर्बध्नाति, अत्रैव युक्तिमाह, अनन्तरं नरकोद्वर्तनसमनन्तरमेव तस्मिन्नरक एवानुत्पत्तेरनुत्पादात् न चाव्यवहितमुत्पद्यत इति सिद्धान्तः, ततश्च यथेदं न बध्नाति तथान्यदपीत्यभिप्रायः। तदभावेऽपि च परमाधार्मिकाद्यभावेऽपि च पङ्कादिपृथिवीषु क्षपणं कर्मणस्तेषां परस्परं दुःखकरणादन्योन्यपीडाकरणेन "परस्परोदीरितदुःखा" ( तत्त्वार्थाधिगमसूत्रम् ३। ४ ) इति वचनात् नान्यनिमित्तं क्षपणमिति स्यादप्रतिष्ठाने नान्यनिमित्तमित्येतदाशङ्क्याह।

**अपइट्ठाणंमि वि संकिलेसओ चेव कम्मखवणं त्ति।**
**न हि तयभावंमि सुरो तत्थ वि य खवेइ तं कम्मं ॥**

[ अप्रतिष्ठानेऽपि संक्लेशत एव कर्मक्षपणमिति।
न हि तदभावे सुरस्तत्रापि च क्षपयति तत्कर्म ॥१३८॥ ]

अप्रतिष्ठानेऽपि सप्तमनरकपृथिवीनरके* संक्लेशत एव तथोत्क्षेपनिपातजनितदुःखादेव कर्मक्षपणमिति नान्यथा, न यस्मात्तदभावे संक्लेशाभावे सुरो देवस्तत्रापि नरके यथासंभवं कथंचिद्गतः सन् चशब्दादन्यत्र च संक्लेशरहितः क्षपयति तत्कर्म यत्प्रवाहतो नरकवेदनीयमिति ।। उपसंहरन्नाह ।

**तम्हा ते वहमाणो अट्टज्झाणाइगं जणंतो वि ।**
**तक्कम्मक्खयहेउं न दोसवं होइ णायव्वो ।।१३९।।**

[ तस्मात्तान् घ्नन्नार्तध्यानादिकं जनयन्नपि ।
तेषां कर्मक्षयहेतुर्न दोषवान् भवति ज्ञातव्यः ।।१३९।। ]

यस्मादेवं तस्मात्तान् दुःखितान्प्राणिनः घ्नन् व्यापादयन् आर्तध्यानादिकं जनयन्नपि आर्तरौद्रध्यानं चित्रं च संक्लेशं कुर्वन्नपि तेषां कर्मक्षयहेतुस्तेषां दुःखितानां कर्मक्षयनिमित्तमिति कृत्वा न दोषवान् भवनि ज्ञातव्यः संसारमोचक इति अयमपि पूर्वपक्षः । अत्रोत्तरमाह—

**चिट्ठउ ता इह अन्नं तक्खवणे तस्स को गुणो होइ ।**
**कम्मक्खउ त्ति तं तुह किंकारणगं विणिद्दिट्ठं ।१४०।**

[ तिष्ठतु तावदिहान्यत्क्षपणे तस्य को गुणो भवति ।
कर्मक्षय इति तत्तव किंकारणकं निर्दिष्टम् ।।१४०।। ]

---

* सप्तमनरके.

तिष्ठतु तावदिह प्रक्रमेऽन्यद्वक्तव्यं तत्क्षपणे दुःखितसत्त्व-कर्मक्षपणे तस्य क्षपयितुर्दुःखितसत्त्वव्यापादकस्य को गुणो भवति न हि फलमनपेक्ष्य प्रवर्तते प्रेक्षावानिति, अथैवं मन्यसे कर्मक्षय इति कर्मक्षयो गुण इत्याशङ्क्याह । तत्कर्म तव हे वादिन् किंकारणं किंनिमित्त निर्दिष्टं प्रतिपादितं शास्त्र इति ॥

अन्नाणकारणं जइ तदवगमा चेव अवगमो तस्स ।
किं वहकिरियाइ तओ विवज्जओ तोइ अह हेऊ ॥

[ अज्ञानकारणं यदि तदपगमादेवापगमस्तस्य ।
किं वधक्रियया ततः विपर्ययः तस्या अथ हेतुः ॥१४१॥]

अज्ञानकारणं अज्ञाननिमित्तं यदि एतदाशङ्क्याह तदप-गमादेवाज्ञाननिवृत्तेरेवापगमस्तस्य निवृत्तिस्तस्य कर्मणः कार-णाभावात् कार्याभाव इति न्यायात्किं वधक्रियया ततः अप्रतिपक्षत्वात्तस्या विपर्ययः तस्या वधक्रियायाः अथ हेतु-रवधक्रियैवेति एतदाशङ्क्याह ।

मुत्ताण कम्मबंधो पावइ एवं निरत्थगा मुत्ती ।
अह तस्स पुन्नबंधो तओ वि न अंतरायाओ १४२

[ मुक्तानां कर्मबन्धः प्राप्नोति एवं निरर्थका मुक्तिः ।
अथ तस्य पुण्यबन्धः तकोऽपि नान्तरायात् ॥१४२॥ ]

एवं च जानिवित्ती सा चेव वहोऽहवावि वहहेऊ।
विसओ वि सु च्चिय फुडं अणुबंधा होइ नायव्वा॥

[ एवं च या अनिवृत्तिः सैव वधो ऽथवापि वधहेतुः।
विषयोऽपि सैव स्फुटं अनुबन्धात् भवति ज्ञातव्या ॥२४७॥]

एवं च व्यवस्थिते सति, या अनिवृत्तिः सैव वधो निश्चयतः प्रमादरूपत्वात्, अथवापि वधहेतुरनिवृत्तितो वधप्रवृत्तेः विषयोऽपि वस्तुतो गोचरोऽपि सैवानिवृत्तिर्वधस्य स्फुटं व्यक्तं अनुबंधात्प्रवृत्त्यध्यवसायानुपरमलक्षणाद्भवति ज्ञातव्या अस्या एव वधसाधकत्वप्राधान्यख्यापनार्थं हेतुविषयाभिधानमदुष्टमेवेति। अमुमेवार्थं समर्थयन्नाह—

हिंसाइपायगाओ अप्पडिविरयस्स अत्थि अणुबंधो।
अत्तो अणिवत्तीओ कुलाइवेरं व नियमेण ॥२४८॥

[ हिंसादिपातकात् अप्रतिविरतस्य अस्त्यनुबन्धः।
अतः अनिवृत्तेः कुलादिवैरवत् नियमेन ॥२४८॥ ]

हिंसादिपातकादादिशब्दात् मृषावादादिपरिग्रहः अप्रतिविरतस्यानिवृत्तस्यास्त्यनुबन्धः प्रवृत्त्यध्यवसायानुपरमलक्षणः उपपत्तिमाह अत एवानिवृत्तेः प्रवृत्तेः कुलादिवैरवन्नियमेनावश्यंतयेति। दृष्टान्तं व्याचिख्यासुराह—

**जेसि मिहो कुलवेरं अप्पडिविरईउ तेसिमन्नोन्नं ।**
**वहकिरियाभावंमि वि न तं सयं चेव उवसमइ ।२४९।**

[ येषां मिथः कुलवैरं अप्रतिविरतेः तेषामन्योन्यम् ।
वधक्रियाभावेऽपि न तत्स्वयमेवोपशाम्यति ॥२४९॥ ]

येषां पुरुषाणां मिथः परस्परं कुलवैरमन्वयासंख्वटं अप्रतिविरतेः कारणात्तेषां अन्योन्यं परस्परं वधक्रियाभावेऽपि सति न तत्स्वयमेवोपशाम्यति किं तूपशमितं सदिति–

**तत्तो य तन्निमित्तं इह बंधणमाइ जह तहा बंधो।**
**सव्वेसु नाभिसंधी जह तेसुं तस्स तो नत्थि ।२५०**

[ ततश्च तन्निमित्तं इह बन्धनादि यथा तथा बन्धः ।
सर्वेषु न अभिसंधिः यथा तेषु तस्य ततो नास्ति ॥२५०॥]

ततश्च तस्मादनुपशमात्तन्निमित्तं वैरनिबन्धनमिह बंधनादि बंधवधादि यथा भवति तेषां, तथेतरेषामनिवृत्तानां तन्निबन्धनो बन्ध इति अत्राह सर्वेषु प्राणिषु नाभिसंधिर्व्यापादनपरिणामो यथा तेषु द्रंगनिवासिषु वध्यत इति तस्य प्रत्याख्यातुस्ततो नास्ति बन्धः इति तथाहि तेऽपि न यथादर्शनमेव प्राणिनां बंधादि कुर्वन्ति किंतु वन्द्रिंगनिवासिनामेव एवं प्रत्याख्यातुरपि न सर्वेषु वधाभिसंधिरिति तद्विषये बंधाभाव इति । एतदाशंक्याह—

अत्थि च्चिय अभिसंधी अविसेसपवित्तिओ जहा तेसु।
अपवित्ती य विणिवित्तीजो उ तेसिं व दोसो उ।२५१

[ अस्त्येवाभिसंधिरविशेषप्रवृत्तितः यथा तेषु ।
अप्रवृत्तावपि अनिवृत्तिज एव तेषां दोष एव ॥२५१॥ ]

अस्त्येवाभिसंधिरनन्तरोदितलक्षणः सर्वेषु कुतोऽविशेषप्रवृत्तितः सामान्येन वधप्रवृत्तेः यथा तेषु रिपुद्रंगनिवासिषु वैरवत· ततश्चाप्रवृत्तावपि वधे अनिवृत्तिज एव तेषामिव वैरवतां दोषः एवमनिवृत्तस्य गर्भार्थो भावित एवेति अदृष्टान्त एवायं सर्वसत्त्वैर्वैरासंभवादिति आशङ्कयाह—

सव्वेसि विराहणओ परिभोगाओ य हंत वेराई ।
सिद्धा अणाइनिहणो जं संसारो विचित्तो य।२५२।

[ सर्वेषां विराधनात् परिभोगाच्च हन्त वैरादयः ।
सिद्धाः अनादिनिधनो यत् संसारो विचित्रश्च ॥२५२॥]

[ सर्वेषां प्राणिनां विराधनात्तेन तेन प्रकारेण परिभोगाच्च स्रक्चन्दनोपकरणत्वेन हन्त वैरादयः सिद्धाः हंत संप्रेषणे स्थानान्तरप्रापणे सति वैरोन्माथकादयः कूटयन्त्रकादयः प्रतिष्ठिताः सर्वसत्त्वविषया इति । उपपत्त्यन्तरमाह । अनादिनिधनो यत्संसारो विचित्रश्चातो युज्यते सर्वमेतदिति उपसंहरन्नाह ।

ता बंधमणिच्छंतो कुज्जा सावज्जजोगविनिवित्तिं।
अविसयअनिवित्तीए सुहभावा दढयरं स भवे ।२५३

[ तस्मात् बन्धमनिच्छन् कुर्यात् सावद्ययोगनिवृत्तिम् ।
अविषयानिवृत्त्या अशुभभावात् दढतरं स भवेत् ।।२५३।।]

यस्मादेवं तस्माद्बन्धमनिच्छन्नात्मनः कर्मणां कुर्यात्सावद्ययोगविनिवृत्तिमोघतः सपापव्यापारनिवृत्तिमित्यर्थः अविषयानिवृत्त्या नारकादिवधाभावेऽपि तदनिवृत्त्या अशुभभावादविषयेऽपि वधविरतिं न करोतीत्यशुभो भावस्तस्मात् दढतरं सुतरां स भवेद्बन्धो भावप्रधानत्वात्तस्येति—

इत्तो य इमा जुत्ता जोगतिगनिबंधणा पवित्तीओ ।
जं ता इमीइ विमओ सव्वुच्चिय होई विन्नेओ ।।

[ इतश्चेयं युक्ता योगत्रिकनिबंधना प्रवृत्तिः ।
यद् अस्याः विषयः सर्व एव भवति विज्ञेयः ।।२५४।।]

इतश्चेयं निवृत्तिर्युक्ता योगत्रिकनिबन्धना मनोवाक्काययोगपूर्विका प्रवृत्तिर्यद्यस्मादस्या अनिवृत्तेर्विषयः सर्व एव भवति विज्ञेय' पाठान्तरं योगत्रिकनिबन्धना निवृत्तिर्यस्मात्संगतार्थमेवेति तथा चाह ।

किं चिंतेइ न मणसा किं वायाए न जंपए पावं ।
न य इत्तो वि न बंधो ता विरई सव्वहा कुज्जा ।।

[ किं चिन्तयति न मनसा किं वाचा न जल्पति पापम् ।
न चेतोऽपि न बन्धः तस्माद्विरतिं सर्वथा कुर्यात् ॥२५५॥]

किं चिन्तयति न मनसा अनिरुद्धत्वात्सर्वत्राप्रतिहतत्वात् तस्य किं वाचा न जल्पति पापं तस्या अपि प्रायोऽनिरुद्धत्वादिति न चातोऽपि योगद्वयव्यापारान्न बन्धः किं तु बन्ध एव यस्मादेवं तत्तस्माद्विरतिं सर्वथा कुर्यात् अविशेषेण कुर्यादित्यर्थः ॥

एवं मिच्छादंसणवियप्पवसओऽसमंजसं केई ।
जंपंति जंपि अन्नं तं पि असारं मुणेयव्वं ।२५६

[ एवं मिथ्यादर्शनविकल्पवशतः असमंजसं केचित् ।
जल्पन्ति यदपि अन्यत् तदपि असारं मुणितव्यम् ॥२५६॥]

एवमुक्तप्रकारं मिथ्यादर्शनविकल्पसामर्थ्येन असमंजसमघटमानकं केचन कुवादिनो जल्पन्ति यदप्यन्यत्किंचित्तदप्यसारं मुणितव्यमुक्तन्यायानुसारत एवेति । उक्तमानुषङ्गिकम् । अधुना प्रकृतमाह ।

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं ।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥२५७॥

[ प्रतिपद्य च व्रतं तस्यातिचारा यथाविधि ज्ञात्वा ।
संपूर्णपालनार्थं परिहर्तव्याः प्रयत्नेन ॥ २५७ ॥ ]

प्रतिपद्य चाङ्गीकृत्य च व्रतं तस्य व्रतस्यातिचारा अति-क्रमणहेतवो यथाविधि यथाप्रकारं ज्ञात्वा परिहर्तव्याः सर्वैः पकारैर्वर्जनीयाः प्रयत्नेनेति योगः किमर्थं संपूर्णपालनार्थं न ह्यतिचारवतः संपूर्णा तत्पालना तद्भावे तत्खंडनादिप्रसंगादिति तथा चाह—

**बंधवहछविच्छेए अइभारे भत्तपाणवुच्छेए।**
**कोहाइदूसियमणो गोमणुयाईण नो कुज्जा ।२५८।**

[ बन्धवधछविच्छेदान् अतिभारं भक्तपानव्यवच्छेदम्।
क्रोधादिदूषितमनाः गोमनुष्यादीनां न कुर्यात् ॥२५८॥]

तत्र बन्धनं बन्धः संयमनं रज्जुदामनकादिभिः ।१। हननं वधस्ताडनं केशादिभिः ।२। छविः शरीरं तस्य छेदः पाटनं करपत्रादिभिः ।३। भरण भारः अतिभरणं अतिभारः प्रभूतस्य पूगफलादेः स्कन्धपृष्ठारोपणमित्यर्थः ।४। भक्तमशन-मोदनादि पानं पेयमुदकादि तस्य व्यवच्छेदो निरोधः अदान-मित्यर्थः ।५। एतान्समाचरन्नतिचरति प्रथमाणुव्रतं एतान् क्रोधादिदूषितमना न कुर्यादिति अनेनापवादमाह अन्यथा-करणेऽप्रतिषेधावगमात् ॥

तदत्रायं पूर्वाचार्योक्तविधिः। बंधो दुविहो दुपयाणं च-उप्पयाणं च अट्ठाए अणट्ठाए अणट्ठाए न वट्टए बंधिउं, अट्ठाए दुविहो सावेक्खो निरवेक्खो य, निरवेक्खो निच्चलं

धणियं जं बंधइ, सावेक्खो जं दामगंठिणा जं च सक्केइ पलिवणगादिसु मुंचिउं छिंदिउं वा ण संसरपासएणं बंधेयव्वं एयं ताव चउप्पयाणं, दुपयाणंपि दासो दासी वा चोरो वा पुत्तो वा ण पढंतगाइ जइ बज्झन्ति तो सावेक्खा बंधेयव्वा रक्खियव्वा य जहा अग्गिभयादिसु ण विणस्संति, ताणि किर दुपयचउप्पयाणि सावगेणं गेह्लियव्वाणि जाणि अबद्धाणि चेव अच्छंति । वहो वि तह चेव वहो नाम तालणं अणट्ठाए णिरवेक्खो निद्दयं तालेइ सावेक्खो पुण पुव्वमेव भीयपरिसेण होयव्वं जइ न करेज्ज तो मम्मं मोत्तुं ताहे लयाए दोरेण वा एक्कं दो तिन्नि वा वारे तालेइ । छविच्छेओ अणट्ठाए तहेव णिरवेक्खो हत्थपायकन्नहोट्ठणकाइ निद्दयाए छिंदइ सावेक्खो गंडं वा अरइयं वा छिंदेज्ज वा दहेज्ज वा । अइभारो ण आरोवेयव्वो, पुव्विं चेव जा वाहणाए जीविया सा मुत्तव्वा न होज्ज अन्ना जीविया ताहे दुपदो जं सयं चेव उक्खिवइ उत्तारेइ वा भारं एवं वहाविज्जइ बइल्लाणं जहा साभावियाओ वि भाराओ ऊणओ कीरइ हलसगडेसु वि वेलाए चेव मुंचइ आसहत्थीसु वि एस चेव विही । भत्तपाणवोच्छेओ ण कस्सइ कायव्वो तिक्खच्छुहो मा मरेज्ज तहेव अणट्ठाए दोसा परिहरेज्जा सावेक्खो पुण रोगनिमित्तं वा वायाए वा भणेज्जा अज्जं ण ते देमित्ति संतिणिमित्तं वा उववासं कारावेज्जा सव्वत्थ वि जयणा जहा

थूलगपाणाइवायस्स अइयारो न भवइ तहा पइयव्वंति ॥ आह च—

**परिसुद्धजलग्गहणं दारुयधन्नाइयाण तह चेव ।**
**गहियाण वि परिभोगो विहीइ तसरक्खणट्ठाए ॥**

[ परिशुद्धजलग्रहणं दारुधान्यादीनां तथैव च ।
गृहीतानामपि परिभोगो विधिना त्रसरक्षणार्थम् ॥२५९॥]

परिशुद्धजलग्रहणं वस्त्रपूतत्रसरहितजलग्रहणमित्यर्थः दारुधान्यादीनां च तथैव परिशुद्धानां ग्रहणं अनीलाजीर्णानां दारूणां अकीटविशुद्धस्य धान्यस्य आदिशब्दात्तथाविधोपस्करपरिग्रहः । गृहीतानामपि परिभोगो विधिना कर्तव्यः परिमितप्रत्युपेक्षितादिना किमर्थं त्रसरक्षणार्थं द्वीन्द्रियादिपालनार्थमिति ॥

उक्तं सातिचारं प्रथमाणुव्रतम् अधुना द्वितीयमुच्यते ।

**थूलमुसावायस्स उ विरई दुच्चं स पंचहा होइ ।**
**कन्नागोभुआलियनासहरणकूडसक्खिज्जे ॥२६०॥**

[ स्थूलमृषावादस्य तु विरतिः द्वितीयं स पञ्चधा भवति ।
कन्यागोभूम्यनृतन्यासहरणकूटसाक्षित्वानि ॥ २६० ॥ ]

स्थूलमृषावादस्य तु विरतिर्द्वितीयमणुव्रतमिति गम्यते । मृषावादो हि द्विविधः स्थूलः सूक्ष्मश्च । तत्र परिस्थूलवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवः स्थूलो विपरीतस्त्वितरो न च तेनेहाधिकारः श्रावकधर्माधिकारत्वात्स्थूलस्यैव प्रक्रान्तत्वात् ।

तथा चाह। स पंचहा भवति स स्थूलो मृषावादः पञ्चप्रकारो भवति। कन्यागोभूम्यनृतन्यासहरणकूटसाक्षित्वानि। अनृतशब्दः पदत्रये प्रत्येकमभिसंबध्यते। तद्यथा। कन्यानृतमित्यादि तत्र कन्याविषयमनृतं कन्यानृतं अभिन्नकन्यकामेव भिन्नकन्यकां वक्ति विपर्ययो वा। एवं गवानृतं अल्पक्षीरामेव बहुक्षीरां वक्ति विपर्ययो वा। एवं भूम्यनृतं परसत्कामेवात्मसत्कां वक्ति व्यवहारे वा नियुक्तोऽनाभवद्व्यवहारेणैव कस्यचिद्रागाद्यभिभूतो वक्ति अस्येयमाभवतीति। न्यस्यते निक्षिप्यत इति न्यासो रूपकाद्यर्पणं तस्यापहरणं न्यासापहारः अदत्तादानरूपत्वादस्य कथं मृषावादत्वमिति उच्यते अपलपतो मृषावाद इति। कूटसाक्षिकं उत्कोचमत्सराद्यभिभूतः प्रमाणीकृतः सन् कूटं वक्तीति

वज्जणमिह पुवुत्तं आह कुमाराइगोयरो कह णु।
एयग्गहणाउ च्चिय गहिओ नणु सो वि दिट्ठव्वो॥

[ वर्जनमिह पूर्वोक्तं आह कुमारादिगोचरः कथं नु।
एतद्ग्रहणादेव च गृहीतो ननु सोऽपि दृष्टव्यः॥२६१॥]

वर्जनमिह मृषावादे पूर्वोक्तं "उवउत्तो गुरुमूले" (१०८) इत्यादिना ग्रन्थेन आह परः कुमारादिगोचरः कथं नु अकुमारं कुमारं ब्रुवतः आदिशब्दादविधवाद्यनृतपरिग्रहः अतिदुष्टविवक्षासमुद्भवोऽप्येष भवति न तु सूत्रे उपात्तः तदेतत्कथं आचार्य आह एतद्ग्रहणादेव च कन्यानृतादिग्रहणादेव च ननु गृहीतो

ऽसावपि कुमारादिगोचरो मृषावादो द्रष्टव्यः उपलक्षणत्वादिति ॥

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं ।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥२६२॥

पूर्ववत् ( २५७ )

सहसा अब्भक्खाणं रहसा य सदारमंतभेयं च ।
मोसोवएसयं कूडलेहकरणं च वज्जिज्जा ।२६३।

[ सहसाभ्याख्यानं रहस्येन च स्वदारमंत्रभेदं च ।
मृषोपदेशं कूटलेखकरणं च वर्जयेत् ॥ २६३ ॥ ]

सहसानालोच्याभ्याख्यानं सहसाभ्याख्यानं अभ्याख्यानमभिशपनमसदध्यारोपणं तद्यथा "चौरः त्वं पारदारिको वा" इत्यादि ।१। रहः एकान्तस्तत्र भवं रहस्यं तेन तस्मिन्वाभ्याख्यानं रहस्याभ्याख्यानं एतदुक्तं भवति एकान्ते मन्त्रयमाणान् वक्त्येते हीदं चेदं च राजापकारित्वादि मन्त्रयन्ते इति । २ । स्वदारमन्त्रभेदं च स्वकलत्रविश्रब्धभाषितान्यकथनं चेत्यर्थः ।३। मृषोपदेशमसदुपदेशमिदमेवं चैवं च कुर्वित्यादिलक्षणं ।४। कूटलेखकरणमन्यमुद्राक्षरबिम्बसरूपलेखकरणं च वर्जयेत् ।५। यत एतानि समाचरन्नतिचरति द्वितीयमणुव्रतमिति ॥

बुद्धीइ निएऊणं भासिज्जा उभयलोगपरिसुद्धं ।
सपरोभयाण जं खलु न सव्वहा पीडजणगं तु ॥

[ बुद्धया निरीक्ष्य भाषेत उभयलोकपरिशुद्धम् ।
स्वपरोभयानां यत् खलु न सर्वथा पीडाजनकं तु ॥२६४॥]

बुद्धया निरीक्ष्य सम्यगालोच्येति भावः भाषेत ब्रूयात् उभयलोकपरिशुद्धं इहलोकपरलोकाविरुद्धं स्वपरोभयानां यत् खलु न सर्वथा पीडाजनकं तत्र स्वपीडाजनकं पिङ्गलस्थपतिवचनवत् परपीडाजनकं चौरस्त्वमित्यादि एवमुभयपीडाजनकमपि द्रष्टव्यमिति—

उक्तं द्वितीयाणुव्रतं सांप्रतं तृतीयमाह—

थूलमदत्तादाणे विरई तच्चं दुहा य तं भणियं।
सचित्ताचित्तगयं समासओ वीयरागेहिं ॥२६५॥

[ स्थूलादत्तादाने विरतिः तच्च द्विधा च तद् भणितम्।
सचित्ताचित्तगतं समासतः वीतरागैः ॥२६५॥ ]

इहादत्तादानं द्विधा स्थूलं सूक्ष्मं च। तत्र परिस्थूलविषयं चौर्यारोपणहेतुत्वेन प्रसिद्धमतिदुष्टाध्यवसायपूर्वकं स्थूलं। विपरीतमितरत्। तत्र स्थूलादत्तादानविषया विरतिर्निवृत्तिस्तृतीयमणुव्रतमिति गम्यते। द्विधा च तददत्तादानं भणितं समासतः संक्षेपेण वीतरागैरर्हद्भिरिति योगः सचित्ताचित्तगतमिति सचित्तादत्तादानं अचित्तादत्तादानं च। तत्र द्विपदादेर्वस्तुनः क्षेत्रादौ सुन्यस्तदुर्न्यस्तविस्मृतस्य स्वामिना अदत्तस्य चौर्यबुद्धया ग्रहणं सचित्तादत्तादानं तथा वस्त्रकनकादेरचित्तादत्तादानमिति।

भेएण लवणघोडगसुवन्नरुप्पाइयं अणेगविहं।
वज्जणमिमस्स सम्मं पुव्वुत्तेणेव विहिणा उ ॥२६६॥

[ भेदेन लवणघोटकरूप्यसुवर्णाद्यनेकविधम्।
वर्जनमस्य सम्यक् पूर्वोक्तेनैव विधिना ॥२६६॥ ]

भेदेन विशेषेणादत्तादानं लवणघोटकरूप्यसुवर्णाद्यनेकविधमनेकप्रकारं लवणघोटकग्रहणात्सचित्तपरिग्रहः रूप्यसुवर्णग्रहणादचित्तपरिग्रह इति वर्जनमस्यादत्तादानस्य सम्यक् पूर्वोक्तेन विधिना उपयुक्तो गुरुमूले (१०८) इत्यादिनेति।

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥२६७॥

पूर्ववत् (२५७), अतिचारानाह—

वज्जिज्जा तेनाहडतक्करजोगं विरुद्धरज्जं च।
कूडतुलकूडमाणं तप्पडिरूवं च ववहारं ॥२६८॥

[ वर्जयेत् स्तेनाहृतं तस्करप्रयोगं विरुद्धराज्यं च।
कूटतुलाकूटमाने तत्प्रतिरूपं च व्यवहारम् ॥२६८॥ ]

वर्जयेत् स्तेनाहृतं स्तेनाश्चौरास्तैराहृतमानीतं किंचित्कुंकुमादि देशान्तरात् तत्समर्थमिति लोभान्न गृह्णीयात्।१। तथा तस्करप्रयोगं तस्कराश्चौरास्तेषां प्रयोगो हरणक्रियायां प्रेरणमभ्यनुज्ञा हरत यूयमिति तस्करप्रयोगः एनं च वर्जयेत्।२।

विरुद्धराज्यमिति च सूचनाद्विरुद्धराज्यातिक्रमं च वर्जयेत् विरुद्धनृपयो राज्य विरुद्धराज्यं तत्रातिक्रमो न हि ताभ्यां तत्र तदागमनमनुज्ञातमिति ।३। तथा कूटतुलाकूटमाने तुला प्रतीता मानं कुडवादि कूटत्वं न्यूनाधिकत्वं न्यूनया ददाति अधिकया गृह्णाति ।४। तथा तत्प्रतिरूपव्यवहरणं तेनाधिकृतेन प्रतिरूपं सदृशं तत्प्रतिरूपं तेन व्यवहरणं यद्यत्र घटते व्रीह्या-दिघृतादिषु पलञ्जीवसादि तस्य तत्र प्रक्षेपेण विक्रयस्तं च वर्ज-येत् ।५। यत एतानि समाचरन्नतिचरति तृतीयाणुव्रतमिति—

उचियं मुत्तूण कलं दव्वाइकमागयं च उक्करिसं।
निवडियमवि जाणंतो परस्स संतं न गिन्हिज्जा ॥

[ उचितां मुक्त्वा कलां द्रव्यादिक्रमायातं चोत्कर्षम् ।
निपतितमपि जानानः परस्य सत्कं न गृह्णीयात् ॥२६९॥]

उचितां मुक्त्वा कलां पञ्चकशतवृद्ध्यादिलक्षणां । द्रव्यादि-क्रमायातं चोत्कर्षं यदि कथंचित्पूगफलादेः क्रयः संवृत्त इत्यष्टगुणो लाभकः अक्रूराभिसंधिना ग्राह्य एवेत्यर्थः आदि-शब्दः स्वभेदप्रख्यापकः तथा निपतितमपि जानानः परस्य सत्कं न गृह्णीयात् प्रयोजनान्तरं चोद्दिश्य समर्पिते प्रतिबुध्य-तीत्यादि गृहीत्वा प्रत्यर्पयेदपीति ॥

उक्तं तृतीयाणुव्रतं सांप्रतं चतुर्थमाह—

परदारपरिच्चाओ सदारसंतोस मो वि य चउत्थं।
दुविहं परदारं खलु उरालवेउव्विभेएणं ॥२७०॥

[ परदारपरित्यागः स्वदारसंतोषोऽपि च चतुर्थम् ।
द्विविधं परदारं खलु औदारिकवैक्रियभेदेन ॥२७०॥ ]

परदारपरित्यागः परकलत्रपरिहारः न वेश्यापरित्याग स्वदारसंतोषश्च स्वकलत्रसेवनमेव न वेश्यागमनमपि चतुर्थमित्येतच्चतुर्थमणुव्रतं । परदारमपि द्विविधमौदारिकवैक्रियभेदेन औदारिकं स्त्र्यादिषु वैक्रियं विद्याधर्यादिष्विति—

वज्जणमिह पुव्वुत्तं पावमिणं जिणवरेहिं पन्नत्तं।
रागाईण नियाणं भवपायवबीयभूयाणं ॥२७१॥

[ वर्जनमिह पूर्वोक्तं पापमिदं जिनवरैः प्रज्ञप्तम् ।
रागादीनां निदानं भवपादपबीजभूतानाम् ॥ २७१ ॥ ]

वर्जनमिह पूर्वोक्तं उपयुक्त इत्यादिना ग्रन्थेन ( १०८ गाथा ) किमेतद्वर्ज्यते इत्याशङ्कयाह पापमिदं परदारासेवनं जिनवरैः प्रज्ञप्तं तीर्थंकरगणधरैः प्ररूपितमिति किंविशिष्टं रागादीनां निदानं कारण किंविशिष्टानां भवपादपबीजभूतानां रागादीनामिति ॥

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥२७२॥

पूर्ववत् (२५७), अतीचारानाह ।

**इत्तरियपरिग्गहियापरिगहियागमणणंगकीडं च ।**
**परविवाहकरणं कामे तिव्वाभिलासं च ॥२७३॥**

[ इत्वरपरिगृहीतापरिगृहीतागमनानंगक्रीडाश्च ।
परविवाहकरणं कामे तीव्राभिलाषश्च ॥ २७३ ॥ ]

इत्वरपरिगृहीतागमनं स्तोककालपरिगृहीतागमनं भाटीप्रदानेन कियन्तमपि कालं स्ववशीकृतवेश्यामैथुनासेवनमित्यर्थः ।१। अपरिगृहीतागमनं अपरिगृहीता नाम वेश्या अन्यसक्तागृहीतभाटी कुलाङ्गना वा अनाथेति तद्गमनं यथाक्रमं स्वदारसंतोषवत्परदारवर्जिनोरतीचारः ।२। अनङ्गक्रीडा नाम कुचकक्षोरुवदनांतरक्रीडा तीव्रकामाभिलाषेण वा परिसमाप्तसुरतस्याप्याहार्यैः स्थूलकादिभिर्योषिदवाच्यप्रदेशासेवननिति ।३। परविवाहकरणमन्यापत्यस्य कन्याफललिप्सया स्नेहसंबन्धेन वा विवाहकरणं स्वापत्येष्वपि सङ्ख्याभिग्रहो न्याय्य इति ।४। कामे तीव्राभिलाषश्चेति सूचनात्कामभोगतीव्राभिलाषः कामा शब्दादयः भोगा रसादयः एतेषु तीव्राभिलाषः अत्यन्ततदध्यवसायित्वम् ।५। एतानि समाचरन्नतिचरति चतुर्थमणुव्रतमिति ॥

**वज्जिज्जा मोहकरं परजुवइदंसणाइ सवियारं ।**
**एए खु मयणबाणा चरित्तपाणे विणासंति ॥२७४॥**

[ वर्जयेत् मोहकरं परयुवतिदर्शनादि सविकारम् ।
एते खलु मदनबाणाः चारित्रप्राणान् विनाशयन्ति २७४ ]

वर्जयेन्मोहकरं परयुवतिदर्शनं आदिशब्दात्संभाषणादिपरिग्रहः किंभूतं सविकारं सविभ्रमम् । एते दर्शनादयो यस्मान्मदनबाणाश्चारित्रप्राणान् विनाशयन्तीति ॥ उक्तं च—

अनिशमशुभसंज्ञाभावनासन्निहत्या,
कुरुत कुशलपक्षप्राणरक्षां नयज्ञाः ।
हृदयमितरथा हि स्त्रीवीलासाभिधाना,
मदनशबरबाणश्रेणयः काणयन्ति ॥ इति

उक्तं चतुर्थमणुव्रतमधुना पञ्चममाह ।

सचित्ताचित्तेसु इच्छापरिणाममो य पंचमयं ।
भणियं अणुव्वयं खलु समासओ णंतनाणिहिं ।२७५।

[ सचित्ताचित्तेषु इच्छापरिमाणं च पञ्चमकम् ।
भणितमणुव्रतं खलु समासतः अनन्तज्ञानिभिः ॥२७५॥ ]

सचित्ताचित्तेषु द्विपदादिहिरण्यादिषु इच्छायाः परिमाणमिच्छापरिमाणं एतावतामूर्ध्वमग्रहणमित्यर्थः । एतत्पञ्चममुपन्यासक्रमप्रामाण्याद्भणितमणुव्रतं खलु समासतः सामान्येनानन्तज्ञानिभिस्तीर्थकरैरिति ॥

भेएण खित्तवत्थूहिरण्णमाइसु होइ नायव्वं ।
दुपयाईसु य सम्मं वज्जणमेयस्स पुव्वुत्तं ॥२७६॥

[ भेदेन क्षेत्रवास्तुहिरण्यादिषु भवति ज्ञातव्यम् ।
द्विपदादिषु च सम्यक् वर्जनमेतस्य पूर्वोक्तम् ॥२७६॥ ]

भेदेन विशेषेण क्षेत्रवास्तुहिरण्यादिषु भवति ज्ञातव्यं, किं इच्छापरिमाणमिति वर्तते, तत्र क्षेत्रं सेतु केतु च उभयं च, वास्त्वगारं खातमुच्छ्रितं खातोच्छ्रित च, हिरण्यं रजतमघटितमादिशब्दाद्धनधान्यादिपरिग्रहः एतदचित्तविषयं द्विपदादिषु चेत्येतत्सचित्तविषयं द्विपदचतुःपदापदादिषु दासीहस्तिवृक्षादिषु सम्यक् प्रवचनोक्तेन विधिना वर्जनमेतस्य पञ्चमाणुव्रतविषयस्य पूर्वोक्तं उपयुक्तो गुरुमूले इत्यादिना ग्रन्थेनेति ।

पडिवज्जिऊण य वयं तस्सइयारे जहाविहिं नाउं ।
संपुन्नपालणट्ठा परिहरियव्वा पयत्तेणं ॥२७७॥

पूर्ववत् (२५७)

खित्ताइहिरन्नाईधणाइदुपयाइकुवियगस्स तहा ।
सम्मं विसुद्धचित्तो न पमाणाइक्कमं कुज्जा ॥२७८॥

[ क्षेत्रादेः हिरण्यादेः धनादेः द्विपदादेः कुप्यकस्य तथा ।
सम्यग्विशुद्धचित्तो न प्रमाणातिक्रमं कुर्यात् ॥२७८॥ ]

क्षेत्रादेरनन्तरोदितस्य तथा हिरण्यादेर्धनादेर्द्विपदादेः कुप्यस्य तथा आसनशयनादेरुपस्करस्य सम्यक् विशुद्धचित्तोऽनिर्मायोऽप्रमत्तः सन् न प्रमाणातिक्रमं कुर्यादिति ॥

**भाविज्ज य संतोसं गहियमियाणिं अजाणमाणेणं ।**
**थोवं पुणो न एवं गिण्हिस्सामोत्ति चिंतिज्जा २७९**

[ भावयेच्च संतोषं गृहीतमिदानीमजानानेन ।
स्तोकं पुनः न एवं ग्रहीष्यामीति चिन्तयेत् ॥२७९॥ ]

भावयेच्च सतोषं किमनेन वस्तुना परिगृहीतेन तथा गृहीतमिदानीमजानानेन स्तोकमिच्छापरिमाणमिति पुनर्नैवमन्यस्मिश्चतुर्मासके ग्रहीष्यामीति न चिन्तयेदतिचार एष इति गाथार्थः॥

उक्तान्यणुव्रतानि सांप्रतमेषामेवाणुव्रतानां परिपालनाय भावनाभूतानि गुणव्रतान्यभिधीयन्ते । तानि पुनस्त्रीणि भवन्ति । तद्यथा । दिग्व्रतमुपभोगपरिभोगपरिमाणं अनर्थदण्डपरिवर्जनमिति ।

तत्राद्यगुणव्रतस्वरूपाभिधित्सयाह—

**उड्ढमहे तिरियं पि य दिसासु परिमाणकरणमिह पढमं ।**
**भणियं गुणव्वयं खलु सावगधम्मम्मि वीरेण॥२८०॥**

[ ऊर्ध्वमधस्तिर्यगपि च दिक्षु परिमाणकरणमिह प्रथमम् ।
भणितं गुणव्रतं खलु श्रावकधर्मे वीरेण ॥२८०॥ ]

ऊर्ध्वमधस्तिर्यक् किं दिक्षु परिमाणमिति। दिशो ह्यनेकप्रकारा वर्णिताः शास्त्रे तत्र सूर्योपलक्षिता पूर्वा शेषाश्च दक्षिणादिकास्तदनुक्रमेण द्रष्टव्याः। तत्रोर्ध्वदिक्परिमाणमूर्ध्वदिग्व्रतमेतावती दिगूर्ध्वं पर्वताद्यारोहणादवगाहनीया न परत इति। एवंभूतमधोदिक्परिमाणं अधोदिग्व्रतं एतावत्यधोदिक् इन्द्रकूपाद्यवतरणादवगाहनीया न परत इति। एवंभूतं तिर्यग्दिक्परिमाणकरणं तिर्यग्दिग्व्रतं एतावती दिक्पूर्वेणावगाहनीया एतावती दक्षिणेनेत्यादि न परत इत्येवमात्मकं एतदित्थं त्रिधा दिक्षु परिमाणकरणं इह प्रवचने प्रथममाद्यं सूत्रक्रमप्रामाण्यात् गुणाय व्रतं गुणव्रतं इत्यस्मिन् हि सत्यवगृहीतक्षेत्राद्बहिः स्थावरजंगमप्राणिगोचरो दण्डः परित्यक्तो भवतीति गुणः श्रावकधर्मे इति श्रावकधर्मविषयमेव केन भणितमिति आह वीरेण।

विदारयति यत्कर्म तपसा च विराजते।
तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः॥

तेन इति चरमतीर्थकृता गुणव्रतमित्युक्तमतो गुणदर्शनायाह, अथवा गुणव्रताकरणे दोषमाह॥

तत्तायगोलकप्पो पमत्तजीवोऽनिवारियप्पसरो।
सव्वत्थ किं न कुज्जा पावं तक्कारणाणुगओ॥२८१॥

[ तप्तायोगोलकल्पः प्रमत्तजीवोऽनिवारितप्रसरः।
सर्वत्र किं न कुर्यात् पापं तत्कारणानुगतः॥२८१॥ ]

तप्तायोगोलकल्पस्तप्तलोहपिण्डसदृशः कोऽसौ प्रमत्तजीवः प्रमादयुक्त आत्मासावनिवारितप्रसरोऽनिवृत्त्या अप्रतिहतप्रमाद-सामर्थ्यः सन् तथागतेः सर्वत्र क्षेत्रे किं न कुर्यात्कुर्यादेव पापं अपुण्यं तत्कारणानुगतः प्रमादपापकारणानुगत इति ॥

पडिवन्नम्मि य विहिणा इमम्मि तव्वज्जणं गुणो नियमा
अइयाररहियपालणभावस्स वि तप्पसूइओ ॥२८२॥

[ प्रतिपन्ने च विधिना अस्मिन् तद्वर्जनं गुणो नियमात् ।
अतिचाररहितपालनभावस्यापि तत्प्रसूतेः ॥२८२॥ ]

प्रतिपन्ने चाङ्गीकृते च विधिना सूत्रोक्तेन अस्मिन् गुण-व्रते तद्वर्जनं प्रमादपापवर्जनं गुणो नियमादात्मोपकारोऽवश्य-भावी न चैव मंतव्यं एतदर्थपरिपालनभाव एव ज्यायान् नत्वे-तत्प्रतिपत्तिः कथमतिचाररहितपालनभावस्यापि निरतिचार-पालनभावस्यापि तत्प्रसूतेर्गुणव्रतादेवोत्पादात्तथाप्रतिपत्तौ हि तथाप्रतिपन्न इति इदमतिचाररहितमनुपालनीयमतोऽस्यैवाति-चारानभिधित्सुराह ॥

उड्ढमहे तिरियं पि न य पमाणाइक्कमं सया कुज्जा ।
तह चेव खित्तवुड्ढिं कहिंचि सइअंतरद्धं च ॥२८३॥

[ ऊर्ध्वमधस्तिर्यगपि च न प्रमाणातिक्रमं सदा कुर्यात् ।
तथैव क्षेत्रवृद्धिं कथंचित् स्मृत्यन्तर्धानं च ॥२८३॥ ]

ऊर्ध्वमधस्तिर्यगपि च न प्रमाणातिक्रमं सदा कुर्यादिति ऊर्ध्वदिक्प्रमाणातिक्रमो यावत्परिमाणं गृहीतं तस्य अतिलंघनं तन्न कुर्यात् ।१। एवमधोदिक्तिर्यक्दिक्प्रमाणातिक्रमयोरपि भावनीयं ।२,३। तथैव क्षेत्रवृद्धिं न कुर्यात् यथेदं अतिचारत्रयं क्षेत्रवृद्धिश्चैकतो योजनशतमभिगृहीतमन्यतो दशयोजनानि ततस्तस्यां दिशि समुत्पन्ने कार्ये योजनशतमध्यादपनीयान्येषां दशादियोजनानां तत्रैव स्वबुद्ध्या प्रक्षेपो वृद्धिकरणमिति ।४। कथंचित् स्मृत्यन्तर्धानं न कुर्यादिति वर्तते स्मृतेर्भ्रंशोऽन्तर्धानं स्मृत्यन्तर्धानं किं मया परिगृहीतं कया वा मर्यादयेत्येवमनुस्मरणमित्यर्थः। स्मृतिमूलं हि नियमानुष्ठानं तद्भ्रंशे तु नियमत एव तद्भंश इति अतिचारतेति ५

तत्र वृद्धसंप्रदायः। उड्ढं जं पमाणं गहियं तस्स उवरिं पव्वयसिहरे पक्खे वा पक्खी वा मक्कडो वा सावगस्स वत्थं वा आभरणं वा गिण्हिउ पमाणाइरेगं भूमिं वच्चेज्जा तत्थ से ण कप्पए गंतुं जाहे तं पडियं अन्नेण वा आणियं ताहे कप्पइ एयं पुण अट्ठावयउज्जंतादिसु हवेज्जा एवं अहे कुवियाईसु विभासा। तिरियं जं पमाणं गहियं तं तिविहेण वि करणेण णाइक्कमियव्वं। खेत्तवुड्ढी ण कायव्वा सो पुव्वेणं भंडं गहाय गओ जाव तं परिमाणं तओ परेण तं भंडं अग्घइत्ति काउं अवरेण जाणि जोयणाणि ताणि पुव्वादिसाए ण छुभेज्जा सिय वोलीणो होज्जा णियत्तियव्वं विस्सरीए वा ण गंतव्वं

अन्नो वि न विसज्जियव्वो अणाणाए कोइ गओ होज्जा जं विसुमरियखेत्तगएण लद्धं अणाणाहिगएण वा तं ण गिण्हिज्जइ ।

उक्तं सातिचारं प्रथमं गुणव्रतं अधुना द्वितीयमुच्यते—

**उवभोगपरीभोगे बीयं परिमाणकरणमो नेयं ।**
**अणियमियवाविदोसा न भवंति कयम्मि गुणभावो ।।**

[ उपभोगपरिभोगयोः द्वितीयं परिमाणकरणं विज्ञेयम् ।
अनियमितव्यापिदोषाः न भवन्ति कृते गुणभावः ।।२८४।।]

उपभोगपरिभोगयोरिति उपभोगपरिभोगविषये यत्परिमाणकरणं तदेव द्वितीयं गुणव्रतं विज्ञेयमिति पदघटना पदार्थस्तु उपभुज्यत इत्युपभोगः अशनादिरुपशब्दस्य सकृदर्थत्वा त्सकृद्भुज्यत इत्यर्थः परिभुज्यत इति परिभोगो वस्त्रादिः पुनः पुनः भुज्यत इति भावः परिशब्दस्याभ्यावृत्त्यर्थत्वादयं चात्मक्रियारूपोऽपि भावतो विषये उपचरितो विषयविषयिणोरभेदोपचारादन्तर्भोगो वा उपभोगः उपशब्दस्यान्तर्वचनत्वात् बहिर्भोगो वा परिभोगः परिशब्दस्य बहिर्वाचकत्वादेतत्परिमाणकरणं एतावदिदं भोक्तव्यमुपभोक्तव्यं वा अतोऽन्यन्नेत्येवंरूपं अस्मिन् कृते गुणमाह अनियमिते असंकल्पिते ये व्यापिनस्तद्विषयं व्याप्तुं शीला दोषास्ते न भवन्ति कृतेऽस्मिस्तद्विरतेरिति गुणभावोऽयमत्र गुण इति । सांप्रतमुपभोगादिभेदमाह—

सो दुविहो भोयणओ कम्मयओ चेव होइ नायव्वो।
अइयारे वि य इत्थं वुच्छामि पुढो समासेणं॥२८५॥

[ स द्विविधः भोजनतो कर्मतश्चैव भवति ज्ञातव्यः।
अतिचारानपि च एतयोः वक्ष्ये पृथक् समासेन॥२८५॥]

स उपभोगः परिभोगश्च द्विविधो द्विप्रकारः भोजनतो भोजनमाश्रित्य कर्मतश्चैव भवति ज्ञातव्यः कर्म चाङ्गीकृत्ये-त्यर्थः। तत्र भोजनतः श्रावकेणोत्सर्गतो निरवद्याहारभोजिना भवितव्यं। कर्मतोऽपि प्रायो निरवद्यकर्मानुष्ठानयुक्तेन विचित्रत्वाच्च देशविरतेश्चित्रोऽत्रापवाद इत्यत एवेदमेवेदमेवेति वा सूत्रे न नियमितमतिचाराभिधानाच्च विचित्रस्तद्विधिः स्वधियावसेय इति।

तथा च वृद्धसंप्रदायः। "भोजनओ सावगो उस्सग्गेण फासुयं एसणियं आहारं आहारेज्जा, तस्सासति अणेसणीयमवि सचित्तवज्जं तस्सासति अणंतकायं बहुबीयाणि परिहरेज्जा, असणे अल्लगमूलगमंसादि पाणे मंसरसमज्जाइ खाइमे पंचुंबरिगादि सादिमे महुमाइ एवं परिभोगे वि वत्थाणि थूल-धवलप्पमुल्लाणि परिमियाणि परिभुंजेज्जा सासणगोरवत्थसुचरिओ वरसिभासा याव देवदूसाइ परिभोगेण वि परिमाणं करेज्जा, कम्मओ वि अकम्मो ण तरइ जीविउं ताहे अच्चन्त-सावज्जाणि परिहरेज्जा इत्थं पि एकसिं चेव जं कीरइ कम्मं

पहरणवहरणादि विवक्खाए तस्सुवभोगो पुणो पुणो य जं तं पुण परिभोगो त्ति अन्ने पुण कम्मपक्खे उवभोगपरिभोगजोयणं ण करिंति उवन्नामोय एयस्सुवभोगपरिभोगकारणभावेणंति " इति कृतं प्रसङ्गेन ।

इहेदमपि चातिचाररहितमनुपालनीयमिति तदभिधित्सयाह । अतिचारानपि चैतयोर्भोजनकर्मणोर्वक्ष्येऽभिधास्ये पृथक् प्रत्येकं समासेन संक्षेपेणेति । तत्र भोजनतोऽभिधित्सयाह—

सच्चित्ताहारं खलु तप्पडिबद्धं च वज्जए सम्मं ।
अप्पोलियदुप्पोलियतुच्छोसहिभक्खणं चेव ॥२८६॥

[ सचित्ताहारं खलु तत्प्रतिबद्धं च वर्जयेत् सम्यक् ।
अपक्वदुःपक्वतुच्छौषधिभक्षणं चैव ॥२८६॥ ]

सचित्ताहारं खलु सचेतनं मूलकन्दादिकं तत्प्रतिबद्धं च वृक्षस्थगुन्दपक्वफलादिलक्षणं वर्जयेन्निहरेत्सम्यक् प्रवचनोक्तेन विधिना तथा अपक्वदुःपक्वतुच्छौषधिभक्षणं च वर्जयेदिति वर्तते तत्रापक्वाः प्रसिद्धाः दुःपक्वास्त्वर्धस्विन्नाः तुच्छास्त्वसारा मुद्गफलीप्रभृतय इति। उक्ता भोजनातिचाराः सांप्रतं कर्माश्रित्याह—

इंगालीवणसाडीभाडीफोडीसु वज्जए कम्मं ।
वाणिज्जं चेव दंतलक्खरसकेसविसविसयं ॥२८७॥

[ अङ्गारवनशकटभाटकस्फोटनेषु वर्जयेत् कर्म।
वाणिज्यं चैव दन्तलाक्षारसकेशविषविषयम् ॥२८७॥ ]

अङ्गारवनशकटभाटकस्फोटनेषु एतद्विषयं वर्जयेत् कर्म न कुर्यात्। तत्राङ्गारकर्मागारकरणविक्रयविषया। एवं शेषेष्वप्यक्षरगमनिका कार्या तथा वाणिज्यं चैव दन्तलाक्षारसकेशविषविषयं दन्तादिगोचरं वर्जयेत्परिहरेदिति॥

एवं खु जंतपीलणकम्मं निल्लंछणं च दवदाणं।
सरदहतलायसोसं असईपोसं च वज्जिज्जा॥२८८॥

[ एवं खलु यन्त्रपीडनकर्मनिर्लाञ्छनं च दवदानम्।
सरोहृदतडागशोषं असतीपोषं च वर्जयेत् ॥२८८॥ ]

एवमेव शास्त्रोक्तेन विधिना यन्त्रपीडनकर्म निर्लाञ्छनं च कर्म दवदानं सरोहृदतडागशोषं असतीपोषं च वर्जयेदिति गाथाद्वयाक्षरार्थः। भावार्थस्तु वृद्धसंप्रदायादेव अवसेयः। स चायम्—

इंगालकम्मंति इंगाले दहिउं विक्किणइ तत्थ छण्हं कायाणं वहो तं न कप्पइ। वणकम्मं जो वणं किणइ पच्छा रुक्खे छिंदिउं मुल्लेण जीवइ एवं पत्तिगाइवि पडिसिद्धा भवंति। साडीकम्मं सागडियत्तणेण जीवइ तत्थ बंधवहाई बहुदोसा। भाडीकम्मं सएण भंडोवक्खरेण भाडएण वहइ परायगं ण कप्पइ अन्नेसिं वा सगडे बइल्लयवेइ एवमाइ ण कप्पइ। फोडीकम्मं उडत्तणं हलेण वा भूमिं फाडेउं जीवइ। दंत-

वाणिज्जं पुव्वं चेव पुलिंदाणं मुल्लं देइ दंते देज्जाहित्ति पच्छा पुलिंदा हत्थि घाएंति अचिरा सो वाणियओ एतित्ति काउं एवं चीवराणं संखमुल्लं देइ एवमाइ न कप्पइ पुव्वाणीयं किणइ। लक्खवाणिज्जे वि एए चेव दोसा तत्थ किमिया होंति। रसवाणिज्जं कल्लावालगत्तणं तत्थ सुरादिपाणे बहु-दोसा मारण-अक्कोस-वहाई तम्हा न कप्पइ। केसवाणिज्ज दासीओ गहाय अन्नत्थ विक्किणइ जत्थ अग्घेति एत्थ वि अणेगे दोसा परवसत्तादयो। विसवाणिज्जं विसविकओ सो ण कप्पइ तेण बहूण जीवाण विराहणा। जंतपीलणकम्मं तेल्लिय-जंतं उच्छुजंतं चक्कमादी तं न कप्पइ। निल्लंछणकम्मं वड्ढेउं बल्ल-हाइ न कप्पइ। दवग्गिदावणयाकम्मं वणदवं देइ छेत्तरक्खण-निमित्तं जहा उत्तरावहे पच्छा दड्ढे तरुणगतणं उट्ठेइ तत्थ सत्ताणं सयसहस्साण वहो। सरदहतलायसोसणयाकम्मं सर दहतलागाईणि सोसेइ पच्छा वाविज्जइ एयं ण कप्पइ। असई-पोसणयाकम्मं असईओ पोसइ जहा गोल्लविसए जोणिपोसगा दासीण भणियं भाडिं गेण्हंति।"

प्रदर्शनं चैतद्बहुसावद्यानां कर्मणामेवंजातीयानां न पुनः परिगणनमिति।

उक्तं सातिचारं द्वितीयं गुणव्रतं सांप्रतं तृतीयमाह।

**विरई अणत्थदंडे तच्चं स चउव्विहो अवज्झाणो।**
**पमायायरियहिंसप्पयाणपावोवएसे य ॥२८९॥**

[ विरतिरनर्थदण्डे तृतीयं स चतुर्विधः अपध्यानः।
प्रमादाचरितः हिंसाप्रदानः पापोपदेशश्च ॥२८९॥ ]

विरतिर्निवृत्तिरनर्थदण्डे अनर्थदण्डविषया इह लोकमप्यङ्गीकृत्य निःप्रयोजनभूतोपमर्दनिग्रहविषया तृतीयं गुणव्रतमिति गम्यते स चतुर्विधः सोऽनर्थदण्ड' चतुःप्रकारः। अपध्यान इति अपध्यानाचरितोऽप्रशस्तध्यानेनासेवितः अत्र देवदत्तश्रावककोङ्कणार्यकसाधुप्रभृतयो ज्ञापकम्। प्रमादाचरितो मद्यादिप्रमादेनासेवितः अनर्थदण्डत्वं चास्योक्तशब्दार्थद्वारेण स्वबुद्ध्या भावनीयम्। हिंसाप्रदानम् इह हिंसाहेतुत्वादायुधानलविषादयो हिंसोच्यते कारणे कार्योपचारात् तेषां प्रदानं अन्यस्मै क्रोधाभिभूतायानभिभूताय वेति। पापोपदेशश्चेति सूचनात्सूत्रमिति न्यायात्पापकर्मोपदेश' पापं यत्कर्म कृष्यादि तदुपदेशो यथा कृष्यादि कुर्वित्यादि। अनर्थदण्डस्यैव बहुबन्धहेतुतां ख्यापयन्नाह—

अट्ठेण तं न बंधइ जमणट्ठेणं तु थेवबहुभावा।
अट्ठे कालाईया नियामगा न उ अणट्ठाए ।२९०।

[ अर्थेन तत् न बध्नाति यदनर्थेन स्तोकबहुभावात्।
अर्थे कालादयो नियामकाः न त्वनर्थे ॥ २९० ॥ ]

अर्थेन कुटुंबादिनिमित्तेन प्रवर्तमानस्तन्न बंधनाति तत्कर्म नादत्ते (ग्रं. १५००) यदनर्थेन यद्विनाप्रयोजनेन प्रवर्तमान. कुतः स्तोकबहुभावात् स्तोकभावेन स्तोकं प्रयोजनं परिमितत्वात् बहु-

प्रयोजनं प्रमादापरिमितत्वात् तथा चाह, अर्थे प्रयोजने कालादयो नियामकाः कालाद्यपेक्षं हि कृष्याद्यपि भवति न त्वनर्थाय प्रयोजनमन्तरेणापि प्रवृत्तौ सदा प्रवृत्तेरिति।

इदमपि चातिचाररहितमेवानुपालनीयमिति, अतः तानाह—

**कंदप्पं कुक्कुइयं मोहरियं संजुयाहिगरणं च।**
**उवभोगपरीभोगाइरेयगयं चित्थ वज्जइ ।२९१।**

[ कंदर्पं कौत्कुच्यं मौखर्यं संयुक्ताधिकरणं च।
उपभोगपरिभोगातिरेकतां चैव वर्जयेत् ॥ २९१ ॥ ]

इति पदघटना ॥ पदार्थस्तु कंदर्पः कामस्तद्धेतुर्विशिष्टो वाक्प्रयोगोऽपि कंदर्प उच्यते रागोद्रेकात्प्रहासमिश्रो मोहोद्दीपको नर्मेति भावः। इह च सामाचारी। सावगस्स अट्टट्टहासो न वट्टइ जइ नाम हसियव्वं तउ इसिं चेव हसियव्वं ति ॥१॥ कौत्कुच्यं कुत्सितसङ्कोचनादिक्रियायुक्तः कुत्कुचः तस्य भावः कौत्कुच्यं अनेकप्रकारमुखनयनौष्ठकरचरणभ्रूविकारपूर्विका परिहासादिजनिका भांडादीनामिव विडंबनक्रियेत्यर्थः। एत्थ सामायारी "तारिसगाणि भासिउं न कप्पंति जारिसेहिं लोगस्स हासो उप्पज्जइ एवं गतीए ठाणेण वा ठाइउं ति" ॥२॥ मौखर्यं धाष्टर्यप्रायोऽसत्यासंबद्धप्रलापित्वमुच्यते "मुहेण वा अरिमाणेइ जहा कुमारामच्चेणं सो वारहडो विसज्जिओ रन्नो णिवेदियं ताए जीवियाए वित्ती दिन्ना अन्नदा रुट्ठेण

मारिओ कुमारामच्चो " ॥ ३ ॥ संयुक्ताधिकरणं अधिक्रियते नरकादिष्वनेनेत्यधिकरणं वास्युदूखलशिलापुत्रकं गोधूमयंत्रकादिषु संयुक्तमर्थक्रियाकरणयोग्यं संयुक्तं च तदधिकरणं चेति समासः। एत्थ सामायारी " सावगेणं संजुत्ताणि चेव सगडाईणि न धरेयव्वाणि एवं वासीपरसुमाइ विभासा " ॥ ४ ॥ उवभोगपरिभोगाइरेगयत्ति ॥ उपभोगपरिभोगशब्दार्थो निरूपित एव तदतिरेकस्तदधिकभावः, एत्थ वि सामायारी " उवभोगातिरित्तं जइ तेल्लामलए बहुए गेण्हइ तो बहुगा ण्हागया वच्चंति तस्स लोलियाए अन्ने वि ण्हागया ण्हायंति पच्छा पूयरगआउकायादिवहो होइ एवं पुप्फतंबोलादिसु विभासा एवं न वट्टइ का विही सावगस्स उवभोगे ण्हाणे घरे ण्हाइयव्वं नत्थि ताहे तेल्लामलएहिं सीसं घसित्ता सव्वे साडविऊण ताहे तलागाईणं तडे निविट्ठो अंजलीहिं ण्हाइ एवं जेसु य पुप्फेसु पुप्फकुंथू ताणि परिहरइ " ॥ ५ ॥

उक्तं सातिचारं तृतीयगुणव्रतं गुणव्रतानन्तरं शिक्षापदव्रतान्याह तानि चत्वारि भवन्ति। तद्यथा—सामायिकं देशावकाशिकं पौषधोपवासः अतिथिसंविभागश्चेति। तत्राद्यमाह—

**सिक्खापयं च पढमं सामाइयमेव तं तु नायव्वं।**
**सावज्जेयरजोगाण वज्जणासेवणारूवं ॥२९२॥**

[ शिक्षापदं च प्रथमं सामायिकमेव तत्तु ज्ञातव्यम्।
सावद्येतरयोगानां वर्जनासेवनारूपम् ॥ २९२ ॥ ]

शिक्षा परमपदप्रापिका क्रिया तस्याः पदं शिक्षापदं तत्र प्रथममाद्यं सूत्रक्रमप्रामाण्यात्सामायिकमेव समो रागद्वेष-वियुक्तो यः सर्वभूतान्यात्मवत्पश्यति आयो लाभः प्राप्तिरिति पर्यायाः समस्यायः समायः समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शन-चारित्रपर्यायैर्निरुपमसुखहेतुभिरधःकृतचिन्तामणिकल्पद्रुमोपमैर्यु-ज्यते स एव समायः प्रयोजनमस्य क्रियानुष्ठानस्येति सामा-यिकं समाय एव वा भवं सामायिकमिति शब्दार्थः। एतत्स्व-रूपमाह-तत्तु सामायिकं ज्ञातव्यं विज्ञेयं स्वरूपतः कीदृ-गिति आह सावद्येतरयोगानां यथासंख्यं वर्जनासेवनरूपमिति तत्रावद्यं गर्हितं पापं सहावद्येन सावद्यं योगा व्यापाराः तेषां वर्जनारूपं परित्यागरूपमित्यर्थः कालावधिनैवेति गम्यते मा भून्सावद्ययोगपरिवर्जनामात्रमपापव्यापारासेवनाशून्यमेव सामा-यिकमिति अत आह इतरयोगासेवनारूपं निरवद्ययोगप्रतिसे-वनारूपं चेति सावद्ययोगपरिवर्जनवन्निरवद्ययोगपरिसेवनेऽपि अहर्निशं यत्नः कार्य इति दर्शनार्थमेतदिति। एत्थ पुण सामायारी "सामाइयं सावगेणं कहं कायव्वंति इह सावगो दुविहो इड्ढिपत्तो अणिड्ढिपत्तो य जो सो अणिड्ढिपत्तो सो चेइयघरे साहुसमीवे घरे वा पोसहसालाए वा जत्थ वा वीसमइ अच्छइ वा निव्वावारो सव्वत्थ करेइ सव्वं चउसु ठाणेसु णियमा कायव्वं चेइयघरे साहुमूले पोसहसालाए घरे आवस्सगं करोति त्ति तत्थ जइ साहुसगासे करेइ तत्थ को

विही जइ परंपरभयं णत्थि जइ विय केणइ समं विवाओ णत्थि जइ कस्सइ न धरेइ मा तेण अच्छत्तिगच्छिथि कड्ढिहिइ य धारणगं दट्ठूण गेण्हइ मा भज्जिहिइ जइ वावारं ण करेइ ताहे घरे चेव सामाइयं काऊण वच्चइ पंचसमिओ तिगुत्तो इरियाउवउत्तो जहा साहू भासाए सावज्जं परिहरंतो एसणाए कट्ठं लेट्ठुं वा पडिलेहिउं पमज्जिउं एवं आयाणे निक्खिवणे खेलसिंघाणए न विगिंचइ विगिंचंतो वा पडिलेहेइ पमज्जिय जत्थ चिट्ठइ तत्थ तिगुत्तिणिरोहं करेइ, एयाए विहीए गंता तिविहेण नमिऊण साहुणो पच्छा सामाइयं करेइ, करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहुं पज्जुवासामित्ति काऊण पच्छा इरियावहियं पडिक्कमइ पच्छा आलोएत्ता वंदइ आयरियाइ जहारायणियाए पुणो वि गुरुं वंदित्ता पडिलेहित्ता निविट्ठो पुच्छइ पढइ वा एवं चेइएसु वि जया सगिहे पोसहसालाए वा तत्थ नवरि गमणं णत्थि । जो इड्ढिपत्तो सो सव्विड्ढीए एइ तेण जणस्स आढा होइ आढिया य साहुणो सुपुरिसपरिग्गहेणं जइ सो कयसामाइओ एइ ताहे आसहत्थिमाइजणेणय अधिगरणं वड्ढइ ताहे ण करेइ कयसामाइएण य पाएहिं आगंतव्वं तेण ण करेइ आगओ साहुसमीवे करेइ जइ सो सावगो तो ण कोइ उट्ठेइ अह अहाभद्दओ जइपूया कया

होउत्ति भणंति ताहे पुच्छरइयं आसणं कीरइ आयरिया उट्ठिया य अच्छंति तत्थ उट्ठितमणुट्ठिते दोसा विभासियव्वा पच्छा सो इड्ढिपत्तो सामाइयं करेइ अणेण विहिणा करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव णियमं पज्जुवासामित्ति एवं सामाइयं काउं पडिक्कंतो वंदित्ता पुच्छइ सो य किर सामाइयं करेंतो मउडं अवणेइ कुंडलाणि णाममुद्दं पुप्फतंबोलं पावारगमाइ वा वोसिरइ एमो विही सामाइयस्स "।

अत्राह—

कयसामइओ सो साहुरेव ता इत्तरं न किं सव्वं ।
वज्जेइ य सावज्जं तिविहेण वि संभवाभावा ॥२९३॥

[ कृतसामायिकः असौ साधुरेव तस्मादित्वरं न किं सर्वम् ।
वर्जयति च सावद्य त्रिविधेनापि संभवाभावात् ॥२९३॥]

कृतसामायिकः प्रतिपन्नसामायिकः सन्नसौ श्रावको वस्तुतः साधुरेव सावद्ययोगनिवृत्तेर्यस्मादेवं तस्मात्साधुवदेवेत्वरमल्पकालं न किं किं न सर्वं निरवशेषं वर्जयति परिहरत्येव सावद्यं सपापं योगमिति गम्यते त्रिविधेनापि मनसा वाचा कायेन चेति । अत्रोच्यते संभवाभावात् श्रावकमधिकृत्य त्रिविधेनापि सर्वसावद्ययोगवर्जनासंभवादिति । असंभवमेवाह—

आरंभाणुमईओ कणगाइसु अग्गहाणिवित्तीओ ।
भुज्जो परिभोगाओ भेओ एसिं जओ भणिओ ॥२९४॥

[ आरंभानुमतेः कनकादिषु आग्रहानिवृत्तेः ।
भूयः परिभोगात् भेदः एतयोः यतः भणितः ॥२९४॥]

आरंभानुमतेः श्रावकस्यारंभेष्वनुमतिरव्यवच्छिन्नैव तथा तेषां प्रवर्तितत्वात् कनकादिषु द्रव्यजातेषु आग्रहानिवृत्तेरात्मीयाभिमानानिवृत्तेरनिवृत्तिश्च भूयः परिभोगादन्यथा सामायिकोत्तरकालमपि तदपरिभोगप्रसङ्गः सर्वथा त्यक्तत्वात् भेदश्चैतयोः साधुश्रावकयोः यतो भणित उक्तः परममुनिभिरिति । भेदाभिधित्सयाह—

सिक्खा दुविहा गाहा उववायट्ठिइगईकसाया य ।
बंधंता वेयंता पडिवज्जाइक्कमे पंच ॥२९५॥

[ शिक्षा द्विविधा गाथा उपपातस्थितिगतिकषायाश्च ।
बन्धः वेदना प्रतिपत्तिरतिक्रमाः पञ्च ॥ २९५ ॥ ]

शिक्षाकृतः साधुश्रावकयोर्भेदः सा च द्विविधा ग्रहणासेवनारूपेति वक्ष्यति तथा गाथा भेदिका, सामाइयंमि उ कए इत्यादिरूपेत्ति वक्ष्यत्येव तथोपपातो भेदकः स्थितिर्भेदिका गतिर्भेदिका कषायाश्च भेदका बन्धश्च भेदकः वेदना भेदिका प्रतिपत्तिर्भेदिका अतिक्रमो भेदक इत्येतत् सर्वमेव

प्रतिद्वारं स्वयमेव वक्ष्यति ग्रन्थकारः पञ्चाथवा किं चेति पाठा-न्तरार्थसहितमपि इति द्वारगाथासमुदायार्थः।

अधुनाद्यद्वारावयवार्थप्रतिपादनायाह—

**गहणासेवणरूवा सिक्खा भिन्ना य साहुसड्ढाणं।**
**पवयणमाईचऊदसपुव्वंता पढमिया जइणो ॥२९६॥**

[ ग्रहणासेवनरूपा शिक्षा भिन्ना च साधुश्राद्धयोः।
प्रवचनमात्रादिचतुर्दशपूर्वान्ता प्रथमा यतेः ॥२९६॥ ]

ग्रहणासेवनरूपा शिक्षेति शिक्षाभ्यासः सा द्विप्रकारा ग्रहण-रूपासेवनरूपा च भिन्ना चेयं साधुश्रावकयोः अन्यथारूपा साधोरन्यथारूपा श्रावकस्येति। तथा चाष्टप्रवचनमात्रादिचतु-र्दशपूर्वान्ता प्रथमा यतेरिति ग्रहणशिक्षामधिकृत्य साधुः सूत्र-तोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातरस्त्रिगुप्तिपञ्चसमितिरूपा उत्कृ-ष्टतस्तु बिंदुसारपर्यन्तानि चतुर्दशपूर्वाणि गृह्णातीति ॥

**पवयणमाईछज्जीवणियंता उभयओ वि इयरस्स।**
**पिंडेसणा उ अत्थे इत्तो इयरं पवक्खामि ॥२९७॥**

[ प्रवचनमातृषड्जीवनिकायान्ता उभयतोऽपि इतरस्य।
पिण्डैषणा त्वर्थतः अतः इतरां प्रवक्ष्यामि ॥२९७॥ ]

प्रवचनमातृषड्जीवनिकायान्ता उभयतोऽपि सूत्रतोऽर्थतश्चे-तरस्य श्रावकस्य पिण्डैषणार्थतः न सूत्रत इति एतदुक्तं भवति

श्रावकः सूत्रतोऽर्थतश्च जघन्येन ता एव प्रवचनमातर उत्कृष्टतस्तु षड्जीवनिकायं यावदुभयतोऽर्थतस्तु पिण्डैषणा न तु तामपि सूत्रत इत्येतावद्गृह्णाति। उक्ता ग्रहणशिक्षा, अत ऊर्ध्वमितरामासेवनशिक्षां प्रवक्ष्यामि यथासौ भेदिका एतयोरिति।

संपुन्नं परिपालइ सामायारिं सदेव साहु त्ति।
ईयरो तक्कालम्मि वि अपरिन्नाणाइओ न तहा।२९८

[ संपूर्णां परिपालयति सामाचारीं सदैव साधुरिति।
इतरः तत्कालेऽपि अपरिज्ञानादेः न तथा ॥२९८॥ ]

संपूर्णां निरवशेषां परिपालयत्यासेवते सामाचारीं मुखवस्त्रिकाप्रत्युपेक्षणादिकां क्रियां सदैव सर्वकालमेव साधुरित्या जन्म तथाप्रवृत्तेः इतरः श्रावकस्तत्कालेऽपि सामायिकसमयेऽपि अपरिज्ञानादेरपरिज्ञानादभिष्वङ्गानिवृत्त्या असंभवादनभ्यासाच्च न तथा पालयत्येवमासेवनाशिक्षापि भिन्नैव तयोरिति द्वारं सूत्रप्रामाण्याच्च विशेष इति गाथेत्युपलक्षिता। तामाह—

सामाइयम्मि उ कए समणो इव सावओ हवइ जम्हा।
एएण कारणेणं बहुसो सामाइयं कुज्जा ॥२९९॥

[ सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात्।
एतेन कारणेन बहुशः सामायिकं कुर्यात् ॥२९९॥ ]

सामायिके प्राङ्निरूपितशब्दार्थे तुशब्दो ऽवधारणार्थः

सामायिक एव कृते न शेषकालं श्रमण इव साधुरिव श्रावको भवति यस्मादेतेन कारणेन बहुशोऽनेकशः सामायिकं कुर्यादिति अत्र श्रमण इवोक्तं न तु श्रमण एवेति यथा समुद्र इव तडागं न तु समुद्र एवेत्यभिप्राय इति । द्वारं उपपातो विशेषक इत्येतदाह—

अविराहियसामन्नस्स साहुणो सावगस्स य जहन्नो ।
सोहंमे उववाओ भणिओ तेलुक्कदंसीहिं ॥३००॥

[ अविराधितश्रामण्यस्य साधोः श्रावकस्य च जघन्यः ।
सौधर्मे उपपातो भणितः त्रैलोक्यदर्शिभिः ॥३००॥ ]

अविराधितश्रामण्यस्य प्रव्रज्यादिवसादारभ्याखण्डितश्रमणभावस्य साधोः श्रावकस्य च अविराधितश्रावकभावस्येति गम्यते जघन्यः सर्वस्तोकः सौधर्मे प्रथमदेवलोके उपपातो भवति जन्म भणित उक्तः त्रैलोक्यदर्शिभिः सर्वज्ञैरिति ॥

उक्कोसेण अणुत्तरअच्चुयकप्पेसु तत्थ तेसि ठिई ।
तित्तीससागराइं बावीसं चेव उक्कोसा ॥३०१॥

[ उत्कृष्टतोऽनुत्तराच्युतकल्पयोः तत्र तयोः स्थितिः ।
त्रयस्त्रिंशत्सागराणि द्वाविंशतिश्चोत्कृष्टा ॥३०१॥ ]

उत्कृष्टतोऽनुत्तराच्युतकल्पयोरिति साधोरनुत्तरविमानेषु श्रावकस्याच्युतकल्प उपपात इति द्वारं । तत्र तयोरिति तत्रानु-

त्तरविमानाच्युतयोस्तयोःसाधुश्रावकयोःस्थितिर्विशिष्टप्राणसधारणात्मिका यथासङ्ख्यं त्रयस्त्रिंशत्सागरोपमाणि द्वाविंशतिरित्युत्कृष्टा साधोस्त्रयस्त्रिंशदनुत्तरेषु श्रावकस्य तु द्वाविंशतिरच्युत इति गाथार्थः।

पलिओवमप्पुहुत्तं तहेव पलिओवमं च इयरा उ।
दुण्हं पि जहासंखं भणियं तेलुक्कदंसीहिं॥३०२॥

[ पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा।
द्वयोरपि यथासंख्यं भणिता त्रैलोक्यदर्शिभिः॥३०२॥ ]

पल्योपमपृथक्त्वं तथैव पल्योपमं चेतरा जघन्या सौधर्म एव साधोः पल्योपमपृथक्त्वं स्थितिः द्विप्रभृतिरा नवभ्यः पृथक्त्वं श्रावकस्य तु पल्योपममिति अत एवाह द्वयोरपि साधुश्रावकयोर्भणिता त्रैलोक्यदर्शिभिः स्थितिर्गम्यते इति द्वारं। तथा गतिर्भेदिकेत्याह—

पंचसु ववहारेणं जइणो सड्ढस्स चउसु गमणं तु।
गइसु चउपंचमासु चउसु य अन्ने जहाकमसो।३०३।

[ व्यवहारेण पञ्चसु यतेः श्राद्धस्य चतसृषु गमनमिति।
गतिषु चतुःपंचमासु चतसृषु चान्ये यथाक्रमशः॥३०३॥

व्यवहारेण सामान्यतो लोकस्थितिमङ्गीकृत्य पञ्चसु यतेः साधोः श्रावकस्य चतसृषु गमनमिति। कासु गतिषु नार-

कतिर्यङ्नरामरसिद्धिरूपासु चउपंचमासु चउसु य अन्ने जहाक- मसो अन्ये त्वभिदधति साधोः सुरगतौ मोक्षगतौ च श्रावकस्य चतसृष्वपि भवांतर्गतिष्विति द्वारं। कषायाश्च भेदका इत्याह-

चरमाण चउन्हं पि हू उदओऽणुदओ व हुज्ज साहुस्स।
इयरस्स कसायाणं दुवालसट्ठाणमुदओ उ ॥२०४॥

[ चरमाणां चतुर्णामपि उदयोऽनुदयो वा भवेत् साधोः ।
इतरस्य कषायाणां द्वादशानामष्टानामुदयः तु ॥२०४॥ ]

संज्वलनानां चतुर्णामपि क्रोधादीनां कषायाणामुदयोऽनु दयो वा भवेत्साधोरुदयश्चतुस्त्रिद्वयेकभेदः, अनुदयोऽप्येवं छद्म- स्थवीतरागादेर्भावनीयः । इतरस्य श्रावकस्य कषायाणां द्वाद- शानामष्टानां चोदय एवेति यदा द्वादशानां तदा अनंतानु- बंधिवर्जा गृह्यन्ते एते चाविरतस्य विज्ञेया यदा त्वष्टानां तदा- नन्तानुबन्ध्यप्रत्याख्यानवर्जा एते च विरताविरतस्येति द्वारं । तथा बन्धश्च भेदक इत्येतदाह-

मूलपयडीसु जइणो सत्तविहट्ठविहछव्विहिक्कविहं ।
बंधंति न बंधंति य इयरे उ सत्तविहबंधा ॥२०५॥

[ मूलप्रकृतिषु यतयः सप्तविधाष्टविधषड्विधैकविधबन्धका
अबन्धकाश्च भवन्ति इतरे सप्तविधबन्धकाः तु ॥२०५॥ ]

मूलप्रकृतिषु ज्ञानावरणादिलक्षणासु विषयभूतासु तस्मि-

न्विषय इति के यतय इति साधवः सप्तविधाष्टविधषड्विधैक-
विधबंधकाबन्धकाश्च भवंति एतद्भावयिष्यति। इतरे श्रावकाः
सप्तविधबन्धकाः तुशब्दादष्टविधबन्धकाश्चायुष्कबन्धकाल इति।
एतदेव विवृण्वन्नाह—

सत्तविहबंधगा हुंति पाणिणो आउवज्जियाणं तु।
तह सुहुमसंपराया छव्विहबंधा विणिद्दिट्ठा ॥३०६॥

[ सप्तविधबन्धका भवन्ति प्राणिनो जीवा आयुर्वर्जितानामेव।
तथा सूक्ष्मसंपरायाः षड्विधबन्धका विनिर्दिष्टाः ॥३०६॥ ]

सप्तविधबन्धका भवन्ति प्राणिनो जीवा आयुर्वर्जिताना-
मेव ज्ञानावरणीयादिप्रकृतीनां सप्तानामिति तथा सूक्ष्मसंपरायाः
श्रेणिद्वयमध्यवर्तिनः तथाविधलोभाणुवेदकाः षड्विधबन्धका
विनिर्दिष्टास्तीर्थकृद्भिरिति ॥

मोहाऊवज्जाणं पयडीणं ते उ बंधगा भणिया।
उवसंतखीणमोहा केवलिणो एगविहबंधा ॥३०७॥

[ मोहायुर्वर्जानां प्रकृतीनां ते तु बन्धका भणिताः।
उपशान्तक्षीणमोहाः केवलिन एकविधबन्धाः ॥३०७॥ ]

मोहायुर्वर्जानां प्रकृतीनां ज्ञानावरणादिरूपाणां ते तु सूक्ष्म-
संपराया बन्धका भणिता, मोहनीयं न बध्नन्ति निदानाभा-
वात्तस्य किंचिच्छेषमात्रत्वावस्थितावप्यसमर्थत्वात् आयुष्कं न

बध्नन्ति तथाविधपरिणामोपात्तस्य वेदनास्थानाभावात्। उप-शान्तक्षीणमोहाः श्रेणिद्वयोपरिवर्तिनः उपशान्तक्षीणच्छद्मस्थ वीतरागाः केवलिनश्च सयोगिभवस्था एकविधबन्धका इति।

**ते पुण दुसमयठिइस्स बंधगा न उण संपरायस्स।**
**सेलेसीपडिवन्ना अबंधगा हुंति नायव्वा ॥३०८॥**

[ ते पुनर्द्विसमयस्थितेः बन्धका न पुनः सांपरायिकस्य।
शैलेशीप्रतिपन्ना अबन्धका भवन्ति ज्ञातव्याः ॥३०८॥ ]

ते पुनरुपशान्तमोहादयस्तस्यैकविधस्य द्विसमयस्थितेरी-र्यापथस्य बन्धका न पुनः सांपरायिकस्य पुनर्भवहेतोरिति। शैलेशीप्रतिपन्ना अयोगिकेवलिनोऽबन्धका भवन्ति ज्ञातव्याः सर्वथा निदानाभावादिति द्वारं। तथा वेदना भेदिकेत्याह—

**अट्ठण्हं सत्तण्हं चउण्ह वा वेयगो हवइ साहू।**
**कम्मपयडीण इयरो नियमा अट्ठण्ह विन्नेओ।३०९।**

[ अष्टानां सप्तानां चतसृणां वा वेदको भवति साधुः।
कर्मप्रकृतीनां इतरः नियमादष्टानां विज्ञेयः ॥३०९॥ ]

अष्टानां सप्तानां चतसृणां वा वेदको भवति साधुः कासां कर्मप्रकृतीनामिति तत्राष्टानां यः कश्चित् सप्तानामुपशान्तक्षी-णमोहच्छद्मस्थवीतरागो मोहनीयरहितानां चतसृणामुत्पन्नकेवलो वेदनीयनामगोत्रायूरूपाणां इतरः श्रावको देशविरतिपरिणामवर्ती

नियमादष्टानां विज्ञेयो वेदक इति द्वारं । प्रतिपत्तिकृतो भेद इति अत्र आह–

पंच महव्वय साहू इयरो इक्काइणुव्वए अहवा ।
सइ सामाइयं साहू पडिवज्जइ इत्तरं इयरो ॥३१०॥

[ पञ्चमहाव्रतानि साधु इतर एकादीनि अणुव्रतानि अथवा ।
सकृत् सामायिकं साधुः प्रतिपद्यते इत्वरं इतरः ॥३१०॥]

पञ्च महाव्रतानि प्राणातिपातादिविरमणादीनि संपूर्णान्येव साधुः प्रतिपद्यत इति योगः । इतरः श्रावकः एकादीनि अणुव्रतानि प्रतिपद्यत इत्येकं द्वे त्रीणि चत्वारि पञ्च चेति ॥ अथवा सकृत्सामायिकं साधुः प्रतिपद्यते सर्वकालं च धारयति । इत्वरमितरः श्रावकोऽनेकशो न च सदा पालयतीति द्वारं । अतिक्रमो भेदक इति एतदाह–

इक्कस्सइक्कमे खलु वयस्स सव्वाणइक्कमो जइणो ।
इयरस्स उ तस्सेव य पाठंतरमो हवा किंच ॥३११॥

[ एकस्यातिक्रमे खलु सर्वेषामतिक्रमो यतेः ।
इतरस्य तु तस्यैव पाठान्तरमेवाथवा किंच ॥३११॥ ]

एकस्यातिक्रमे केनचित्प्रकारेण व्रतस्य सर्वेषामतिक्रमो यतेस्तथाविधैकपरिणामत्वात् । इतरस्य तु श्रावकस्य तस्यैवाधिकृतस्याणुव्रतस्य न शेषाणां विचित्रविरतिपरिणामात् पाठा-

न्तरमेवाथवा द्वारगाथायां तच्चेदं किं च " सव्वं ति भाणि-ऊणं " इत्यादिग्रन्थान्तरापेक्षमन्यत्रेति ।

उक्तमानुषङ्गिकं प्रकृतं प्रस्तुम इदमपि च शिक्षापदव्रतमतिचाररहितमनुपालनीयमिति । तानाह–

**मणवयणकायदुप्पणिहाणं सामाइयम्मि वज्जिज्जा ।**
**सइअकरणयं अणवट्ठियस्स तह करणयं चेव ॥३१२॥**

[ मनोवाक्कायदुःप्रणिधानं सामायिके वर्जयेत् ।
स्मृत्यकरणतां अनवस्थितस्य तथा करणं चैव ॥३१२॥ ]

मनोवाक्कायदुःप्रणिधानं मनोदुष्टचिन्तनादि सामायिके कृते सति वर्जयेत् स्मृत्यकरणतां अनवस्थितस्य तथा करणं चैव वर्जयेत् । तत्र स्मृत्यकरणं नाम सामायिकविषया या स्मृतिस्तस्या अनासेवनमिति एकदुक्तं भवति प्रबलप्रमादान्नैव स्मरत्यस्यां वेलायां सामायिकं कर्तव्यं कृतं न कृतमिति वा स्मृतिमूलं च मोक्षसाधनानुष्ठानमिति । सामायिकस्यानवस्थितस्य करणं अनवस्थितमल्पकालं करणानन्तरमेव त्यजति यथाकथञ्चिद्वानवस्थितं करोतीति । एतदेव अतिचारजातं विधिप्रतिषेधाभ्यां स्पष्टयति ।

---

१ सव्वं ति भाणिऊणं विरई खलु जस्स सव्विया नत्थि ।
सो सव्वविरइवाई चुक्कइ देसं च सव्वं च ॥

सामाइयं ति काउं परचिंतं जो उ चिंतई सड्ढो।
अट्टवसट्टोवगओ निरत्थयं तस्स सामइयं ।३१३।

[ सामायिकमिति कृत्वा परचिन्तां यस्तु चिन्तयति श्राद्धः।
आर्तवशार्तोपगतः निरर्थकं तस्य सामायिकम् ॥३१३॥]

सामायिकमित्येवं कृत्वा आत्मानं संयम्य परचिन्तां संसारे इतिकर्तव्यताविषयां यस्तु चिन्तयति श्रावकः, आर्तवशार्तश्च स उपगतश्चेति समास आर्तध्यानसामर्थ्येनार्तः उप सामीप्येन गतो भवस्येति भावार्थः निरर्थकं तस्य सामायिकं अनात्मचिन्तावतो निःफलं सामायिकमित्यर्थः। आत्मचिन्ता च सद्ध्यानरूपेति ।१।

उक्तो मनोदुःप्रणिधानविधिः। सांप्रतं वाग्दुःप्रणिधानमाह—

कयसामइओ पुव्विं बुद्धीए पेहिऊण भासिज्जा।
सइ अणवज्जं वयणं अन्नह सामाइयं न भवे।३१४।

[ कृतसामायिकः पूर्वं बुद्ध्या प्रेक्ष्य भाषेत।
सदा निरवद्यं वचनं अन्यथा सामायिकं न भवेत्॥३१४॥]

कृतसामायिकः सन् श्रावकः पूर्वमाद्यं बुद्ध्या प्रेक्ष्यालोच्य भाषेत ब्रूयात् सदा निरवद्यवचनं प्रणालिकयापि न कस्यचित्पीडाजनकं, अन्यथानालोच्य भाषमाणस्य सामायिकं न भवेत् वाग्दुःप्रणिहितत्वादिति ।२।

भणितो वाग्दुःप्रणिधानातिचारः । सांप्रतं कायप्रणिधानमुर-रीकृत्याह—

**अनिरिक्खियापमज्जिय थंडिल्ले ठाणमाइ सेवंतो।**
**हिंसाभावे वि न सो कडसामइओ पमायाओ।३१५।**

[ अनिरीक्ष्य अप्रमृज्य स्थण्डिले स्थानादि सेवमानः ।
हिंसाभावेऽपि नासौ कृतसामायिकः प्रमादतः ॥३१५॥]

अनिरीक्ष्य चक्षुषा अप्रमृज्य च मृदुवस्त्रान्तेन स्थण्डिले कल्पनीयभूभागे स्थानादि कायोत्सर्गनिषीदनादि सेवमानः सन् हिंसाभावेऽपि प्राण्यभावेन कथंचिद्व्यापत्त्यभावेऽपि नासौ कृतसामायिकः । कुतः प्रमादात्काये दुःप्रणिधानादिति ।३।

प्रतिपादितः कायदुःप्रणिधानमार्गः । सांप्रतं स्मृत्यकरण-मधिकृत्याह--

**न सरइ पमायजुत्तो जो सामइयं कया उ कायव्वं ।**
**कयमकयं वा तस्स उ कयं पि विफलं तयं नेयं ।३१६।**

[ न स्मरति प्रमादयुक्तः यः सामायिकं कदा तु कर्तव्यम् ।
कृतमकृतं वा तस्य कृतमपि विफलं तकं ज्ञेयम् ॥३१६॥]

न स्मरति प्रमादयुक्तः सन् यः सामायिकं कदा तु कर्त-व्यं कोऽस्य काल इति कृतमकृतं वा न स्मरति, तस्येत्थं—

भूतस्य कृतमपि सद् विफलं तत् ज्ञेयं स्मृतिमूलत्वाद्धर्मानुष्ठानस्य, तदभावे तदभावात् ।४।

व्याख्यातं स्मृत्यकरणमधुनानवस्थितकरणमाह—

**काऊण तक्खणं चिय पारेइ करेइ वा जहिच्छाए ।**
**अणवट्ठियसामइयं अणायराओ न तं सुद्धं ॥३१७॥**

[ कृत्वा तत्क्षणमेव पारयति करोति वा यदृच्छया ।
अनवस्थितसामायिकं अनादराच्च तच्छुद्धम् ॥३१७॥ ]

कृत्वा तत्क्षणमेव करणानन्तरमेव पारयति, करोति वा यदृच्छया यथाकथंचिदेवमनवस्थितं सामायिकमनादरादबहुमानान्नैतच्छुद्धं भवति न निरवद्यमिति ॥५॥

उक्तं सातिचारं प्रथमं शिक्षापदमधुना द्वितीयमाह—

**दिसिवयगहियस्स दिसापरिमाणस्सेह पइदिणं जं तु ।**
**परिमाणकरणमेयं बीयं सिक्खावयं भणियं । ३१८ ।**

[ दिग्व्रतगृहीतस्य दिक्परिमाणस्य इह प्रतिदिनं यदेव ।
परिमाणकरणमेतद् द्वितीयं शिक्षापदं भणितम् ॥३१८॥]

दिग्व्रतं प्राङ्निरूपितस्वरूपं तद्गृहीतस्य दिक्परिमाणस्य योजनशतादेर्दीर्घकालिकस्य इह लोके प्रतिदिनं यदेव परिमाणकरणमेतावदेव गन्तव्यं न परत इत्येतद्द्वितीयं शिक्षापदं

भणितमिह प्रवचने इति । प्रतिदिवसग्रहणं प्रतिप्रहराद्युपलक्षणं प्रतिप्रहरं प्रतिघटिकमिति ॥

देसावगासियं नाम सप्पविसनायओऽपमायाओ ।
आसयसुद्धीइ हियं पालेयव्वं पयत्तेणं ॥३१९॥

[ देशावकासिकं नाम सर्पविषज्ञातात् अप्रमादात् ।
आशयशुद्धया हितं पालयितव्य प्रयत्नेन ॥३१९॥ ]

दिग्व्रतगृहीतदिक्परिमाणैकदेशो देशस्तस्मिन्नवकाशो गमनादिचेष्टास्थानं तेन निर्वृत्तं देशावकाशिकमिति । नामेति संज्ञा । एतच्च सर्पविषज्ञातात् सर्पोदाहरणेन विषोदाहरणेन च । जहा सप्पस्स पुव्वं बारस जोयणाणि विसओ आसी दिट्ठीए पच्छा विज्जावाइएण ओसारंत्तेण जोयणे ठविओ एवं सावगो दिसिव्वयाहिगारे बहुयं अवरज्झियाइओ पच्छा देसावगासिएणं तं पि ओसारइ, अहवा विसदिट्ठंतो अगएण एगाए अंगुलीए ठवियं एवं विभासा ॥ एवमप्रमादात्प्रतिदिनादिपरिमाणकरणे अप्रमादस्तथा चाशयशुद्धिः चित्तवैमल्यं, ततो हितमिदमिति पालयितव्य प्रयत्नेनेति । इदमपि चातिचाररहितमनुपालनीयमिति ॥ अतस्तानाह—

वज्जिज्जा आणयणप्पओगपेसप्पओगयं चेव ।
सद्दाणुरूववायं तह बहिया पुग्गलक्खेवं ॥३२०॥

[ वर्जयेत् आनयनप्रयोगं प्रेष्यप्रयोगं चैव।
शब्दानुपातं रूपानुपातं तथा बहिःपुद्गलक्षेपम् ॥३२०॥]

प्रतिपन्नदेशावकाशिकः सन् वर्जयेत् किं आनयनप्रयोगं प्रेष्यप्रयोगं चैव शब्दानुपातं रूपानुपातं च तथा बहिर्वा पुद्गलक्षेपं वर्जयेदिति पदघटना। भावार्थस्तु इह विशिष्टावधिके भूदेशाभिग्रहे परतः स्वयं गमनायोगाद्योऽन्यः सचित्तादिद्रव्यानयने प्रयुज्यते, संदेशकप्रदानादिना "त्वयेदमानेयम्" इति अयमानयनप्रयोगः ॥ तथा प्रेष्यप्रयोगः बलाद्विनियोज्यः प्रेष्यस्तस्य प्रयोगो, यथाभिगृहीतप्रविचारदेशव्यतिक्रमभयात् "त्वयावश्यमेव गत्वा मम गवाद्यानेयमिदं वा तत्र कर्तव्यमेव" एवंभूतः ।२। तथा शब्दानुपातः स्वगृहवृत्तिप्राकारादिव्यवच्छिन्नभूप्रदेशाभिग्रहे बहिः प्रयोजनोत्पत्तौ, तत्र स्वयंगमनायोगाद्वृत्तिप्राकारप्रत्यासन्नवर्तिनो बुद्धिपूर्वकमभ्युत्कासितादिकशब्दकरणेन समवसितकान्बोधयतः शब्दानुपातनमुच्चारणं तादृग्येन परकीयश्रवणविवरमनुपतत्यसाविति ।३। तथा रूपानुपातो गृहीतदेशाद्बहिः प्रयोजनभावे शब्दमनुच्चारयत एव परेषां समीपानयनार्थं स्वशरीररूपप्रदर्शनं रूपानुपातः ।४। तथा बहिः पुद्गलक्षेपोऽभिगृहीतदेशाद्बहिः प्रयोजनभावे परेषां प्रबोधनाय लेष्टवादिक्षेपः पुद्गलप्रक्षेप इति भावना ।५। देशावकाशिकमेतदर्थमभिगृह्यते मा भूद्बहिर्गमनागमनादिव्यापारजनितः प्राण्युपमर्द

इति स च स्वयं कृतोऽन्येन वा कारितः इति न कश्चित्फले विशेषः प्रत्युत गुणः स्वयं गमन ईर्यापथविशुद्धेः परस्य पुनरनिपुणत्वात्तदशुद्धिरिति ।

व्याख्यातं सातिचारं द्वितीयं शिक्षापदमधुना तृतीयमुच्यते—

**आहारपोसहो खलु सरीरसक्कारपोसहो चेव ।**
**बंभव्वावारेसु य तइयं सिक्खावयं नाम ॥३२१॥**

[ आहारपौषधः खलु शरीरसत्कारपौषधश्चैव ।
ब्रह्माव्यापारयोश्च तृतीयं शिक्षापदं नाम ॥३२१॥ ]

आहारपौषधः खलु शरीरसत्कारपौषधश्चैव ब्रह्माव्यापारयोश्चेति ब्रह्मचर्यपौषधोऽव्यापारपौषधश्चेति । इह पौषधशब्दः रूढ्या पर्वसु वर्तते । पर्वाणि चाष्टम्यादितिथयः पूरणात्पर्व धर्मोपचयहेतुत्वादिति । तत्राहारः प्रतीतः तद्विषयस्तन्निमित्तो वा पौषधः आहारपौषधः आहारादिनिवृत्तिनिमित्तं धर्मपूरणं पर्वेति भावना । एवं शरीरसत्कारपौषधः । ब्रह्मचर्यपौषधः अत्र चरणीयं चर्यं अतो यदित्यस्मादधिकारात् गदमदचरयमश्चानुपसर्गे इति यत् ब्रह्म कुशलानुष्ठानं यथोक्तं । ब्रह्म वेदो ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतं । ब्रह्मवत् चर्यं चेति समास शेषः पूर्ववत् । तथाव्यापारपौषधः तृतीयं शिक्षाव्रतं नामेति सूचनात्सूत्रमिति न्यायात्तृतीयं शिक्षापदव्रतमिति एतदेव विशेषेणाह-

देसे सव्वे य दुहा इक्किक्को इत्थ होइ नायव्वो।
सामाइए विभासा देसे इयरम्मि नियमेण ॥३२२॥

[ देशे सर्वस्मिन् च द्विधैव एकैकः अत्र भवति ज्ञातव्यः ।
सामायिके विभाषा देशे इतरस्मिन्नियमेन ॥३२२॥ ]

देश इति देशविषयः सर्व इति सर्वविषयश्च द्विधा द्विप्रकार एकैक आहारपौषधादिरत्र प्रवचने भवति ज्ञातव्यः सामायिके विभाषा कदाचित्क्रियते कदाचिन्नेति देशपौषधे, इतरस्मिन् सर्वपौषधे नियमेन सामायिकं अकरणात्मवंचनेति।

भावत्थो पुण इमो–आहारपोसहो दुविहो, देसे सव्वे य. देसे अमुगा विगती आयंबिलं वा एक्कसिं वा दो वा सव्वे चउव्विहो आहारो अहोरत्तं पच्चक्खाओ। सरीरसकारपोसहो न्हाणुव्वट्टणवन्नगविलेवणपुप्फगन्धतंबोलाणं वत्थाहरणपरिच्चागो य, सो दुविहो देसे सव्वे य, देसे अमुगं सरीरसकारं न करेमि सव्वे सव्वं न करेमि त्ति। बंभचेरपोसहो वि देसे सव्वे य देसे दिवारत्तिं वा एक्कसिं वा दो वारे त्ति सव्वे अहोरत्तं बंभचारी भवति। अव्वावारपोसहो वि दुविहो देसे सव्वे य देसे अमुगंमि वावारंमि सव्वे सव्वं वावारं चेव हलसगडघरकम्माइयं ण करेमि। एत्थ जो देसपोसहं करेइ सो सामायिकं करेइ वा ण वा जो सव्वपोसहं करेइ सो नियमा कयसामाइओ जइ ण करे तो णियमा वंचिज्जइ कहिं चेइयघरे साहु-

मूले वा घरे वा पोसहसालाए वा उम्मुक्कमणिसुवण्णो पढंतो पोत्थगं वा वायंतो धम्मज्झाणं वा झायइ जहा एए साहुगुणा अहमसत्थो मंदभग्गो धारेउं विभासा । इदमपि च शिक्षापद-व्रतमतिचाररहितमनुपालनीयमिति । अत आह—

**अप्पडिदुप्पडिलेहियसिज्जासंथारयं विवज्जिज्जा ।**
**अपमज्जियदुपमज्जिय तह उच्चाराइ भूमिं च ।३२३।**

[ अप्रत्युपेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारकौ वर्जयेत् ।
अप्रमार्जितदुष्प्रमार्जितं तथा उच्चारादिभुवमपि ।।३२३।। ]

अप्रत्युपेक्षितदुःप्रत्युपेक्षितशय्यासंस्तारकौ वर्जयेत् । इह संस्तीर्यते यः प्रतिपन्नपौषधोपवासेन दर्भकुशकम्बलवस्त्रादिः स संस्तारकः शय्या प्रतीता अप्रत्युपेक्षणं गोचरापन्नस्य शय्यादेः चक्षुषानिरीक्षणं दुष्टमुद्भ्रान्तचेतसः प्रत्युपेक्षणं दुष्प्रत्युपेक्षणं ततश्चाप्रत्युपेक्षितदुष्प्रत्युपेक्षितौ च शय्यासंस्तारकौ चेति समासः शय्यैव वा संस्तारक इति । एवमन्यत्रापि अक्षरगमनिका कार्येति । उपलक्षणं च शय्यासंस्तारकावुपयोगिनः पीढफल-कादेरपि ।

एत्थं सामायारी कडपोसहो णो अप्पडिलेहिय सेज्जं दुरु-हइ संथारगं वा दुरुहइ पोसहसालं वा सेवइ दब्भवत्थं वा सुद्ध-वत्थं वा भूमीए संथारेइ काइयभूमीउ वा आगओ पुणरवि पडिलेहइ अण्णहातियारो एवं पीढफलगादिसु वि विभासा ।

तथा अप्रमार्जितदुःप्रमार्जितशय्यासंस्तारकावेव । इहाप्रमार्जनं शय्यादेरासेवनकाले वस्त्रोपान्तादिनेति दुष्टमविधिना प्रमार्जनं शेषं भावितमेव । एवमुच्चारप्रस्रवणभूवमपि उच्चारप्रस्रवणं—निष्ठ्यूतस्वेदमलाद्युपलक्षणं शेषं भावितमेव । गाहा—

तह चेव य उज्जुत्तो विहीइ इह पोसहम्मि वज्जिज्जा ।
सम्मं च अणणुपालणमाहाराईसु सव्वेसु ॥३२४॥

[ तथैव च उद्युक्तः विधिना इह पौषधे वर्जयेत् ।
सम्यगननुपालनं च आहारादिषु सर्वेषु ॥३२४॥ ]

तथैव च यथानन्तरोदितमुद्युक्तो विधिना प्रवचनोक्तक्रियया निःप्रकम्पेन मनसा इह पोषधे पौषधविषयं वर्जयेत् किं सम्यगननुपालनं चेति क्व आहारादिषु सर्वेषु सर्वाहारादिविषयमिति गाथाक्षरार्थः ।

एत्थ भावणा—कयपोसहो अथिरचित्तो आहारे ताव सव्वं देसं वा पत्थेइ बीयदिवसे पारणगस्स वा अप्पणोट्ठाए आढत्ति करेइ कारवेइ वा इमं इमं वत्ति करेह । न वट्टइ सरीरसक्कारे सरीरमुव्वट्टेइ दाढियाउ केसे वा रोमाइं वा सिंगाराभिप्पाएण संठवेइ दाहे वा सरीरं सिंचइ एवं सव्वाणि सरीरविभूसाकारणाणि परिहरइ । बंभचेरे इहलोइए वा परलोइए भोगे पत्थेइ संवाहेइ वा अहवा सद्दफरिसरसरूवगंधे वा अभिलसइ कइया बंभचेरपोसहो पूरिहिइ चइयामो बंभचेरेणंति । अव्वावारे साव-

ज्जाणि वावारेइ कयमकयं वा चिंतेइ एवं पंचातियारसुद्धो अणुपालेयव्वोत्ति गाथाद्वयभावार्थः ।

उक्तं सातिचारं तृतीयं शिक्षापदव्रतमधुना चतुर्थमुच्यते—

**नायागयाण अन्नाइयाण तह चेव कप्पणिज्जाणं ।**
**देसद्धसद्धसक्कारकमजुयं परमभत्तीए ॥३२५॥**

[ न्यायागतानां अन्नादीनां तथा चैव कल्पनीयानाम् ।
देशकालश्रद्धासत्कारक्रमयुक्तं परमभक्त्या ॥३२५॥ ]

न्यायागतानामिति, न्यायो द्विजक्षत्रियविट्शूद्राणां स्ववृत्त्यनुष्ठानं स्ववृत्तिश्च प्रसिद्धैव प्रायो लोकहेर्या तेनेदृशन्यायेनागतानां प्राप्तानामनेनान्यायागतानां प्रतिषेधमाह । अन्नादीनां द्रव्याणां आदिग्रहणात्पानवस्त्रपात्रौषधभेषजादिपरिग्रहः अनेनापि हिरण्यादिव्यवच्छेदमाह । कल्पनीयानामिति उद्गमादिदोषपरिवर्जितानां अनेनाकल्पनीयानां निषेधमाह । देशकालश्रद्धासत्कारक्रमयुक्तं नानाव्रीहिकोद्रवकङ्गुगोधूमादिनिष्पत्तिभाग्देशः, सुभिक्षदुर्भिक्षादिः कालः, विशुद्धचित्तपरिणामः श्रद्धा, अभ्युत्थानासनदानवंदनाद्यनुव्रजनादिः सत्कारः, पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः, एभिर्देशादिभिर्युक्तं समन्वितं, अनेनापि विपक्षव्यवच्छेदमाह । परमया प्रधानया भक्त्या इत्यनेन फलप्राप्तौ भक्तिकृतमतिशयमाहेति ॥

आयाणुग्गहबुद्धीइ संजयाणं जमित्थ दाणं तु ।
एयं जिणेहि भणियं गिहीण सिक्खावयं चरिमं ३२६

[ आत्मानुग्रहबुद्धया संयतेभ्यः यदत्र दानं तु ।
एतद् जिनैः भणितं गृहिणां शिक्षाप्रदं चरमम् ।।३२६।।]

आत्मानुग्रहबुद्धया न पुनर्यत्यनुग्रहबुद्धयेति तथाहि आत्मपरानुग्रहपरा एव यतयः । संयता मूलोत्तरगुणसंपन्नाः साधवस्तेभ्यो दानमिति एतज्जिनैस्तीर्थकरैर्भणितं गृहिणः श्रावकस्य शिक्षापदमिति शिक्षापदव्रतं चरमं अतिथिसंविभागाभिधानं इह भोजनार्थं भोजनकालोपस्थाय्यतिथिरुच्यते । आत्मार्थनिष्पादिताहारस्य गृहिणो व्रती साधुरेवातिथिः । यत उक्तं

तिथिः पर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ।।

तस्य संविभागो अतिथिसंविभागः संविभागग्रहणात्पश्चात्कर्मादिपरिहारमाहेति ।

एत्थ सामायारी—सावगेण पोसहं पारंतेण नियमा साहूणमदाउं न पारेयव्वं दाउं पारेयव्वं । अन्नया पुण अनियमो दाउं वा पारेइ पारिए वा देइ त्ति तम्हा पुव्वं साहूणं दाउं पच्छा पारेयव्वं कहं जाहे देसकालो ताहे अप्पणो सरीरस्स विभूसं काउं साहुपडिस्सयं गंतुं णिमंतेइ भिक्खं गेण्हह त्ति । साहूणं का पडिवत्ती ताहे अन्नो पडलयं अन्नो मुहणंतगं

अन्नो भायणं पडिलेहेइ मा अंतराइयदोसा ठवणा दोसो य भविस्सन्ति। सो जइ पढमाए पोरिसीए णिमंतेइ अत्थि णमो-कारसहियाइत्ता तो गच्छइ अह नत्थि न गच्छइ तं ठवियव्वं होइ जइ घणं लगेज्जा ताहे गेण्हइ संचिक्खाविज्जइ जो व उग्घाडाए पोरसीए पारेइ पारणाइत्तो अन्नो वा तस्स दिज्जइ सामन्नेणं नाए कहिए पच्छा तेण सावगेण समं गम्मइ संघा-डगो वच्चइ एगो न वट्टइ पट्ठवेउं साहू पुरओ सावगो मग्गओ घरं णेऊण आसणेण उवणिमतिज्जइ जइ णिविट्ठो लट्ठयं अह ण णिविसति तहा वि विणओ पयत्तो ताहे भत्तपाणं देइ सयं चेव अहवा भाणं धरेइ भज्जा से देइ अहव ठिओ अच्छइ जहा दिन्नं साहुवि सावसेसं दव्वं गेण्हइ पच्छाकम्म-परिहरणट्ठा दाउं वंदिऊण विसज्जेइ विसज्जित्ता अणुगच्छइ पच्छा सयं भुंजइ जं तं किर साहुण ण दिन्नं तं सावगेण न भोत्तव्वं। जइ पुण साहू णत्थि ताहे देसकालवेलाए दिसा-लोओ कायव्वो विसुद्धभावेण चिंतियव्वं साहुणो जइ होंता नाम नित्थारिओ होंतो विभासा।

इदमपि शिक्षापदव्रतमतिचाररहितमनुपालनीयमिति एतदाह—

सच्चित्तनिक्खिवणयं वज्जे सच्चित्तपिहणयं चेव।
कालाइक्कमदाणं परववएसं च मच्छरियं ॥३२७॥

---

१ एष पाठोऽशुद्ध इव प्रतिभाति परं दृष्टादर्शेऽप्येतादृश एव।

[ सचित्तनिक्षेपणं वर्जयेत् सचित्तपिधानं चैव ।
कालातिक्रमदानं परव्यपदेशं मात्सर्यं च ॥ ] विवर्जयेत्

तत्र सचित्तनिक्षेपणं सचित्तेषु व्रीह्यादिषु निक्षेपणमन्ना-देरदेयबुद्ध्या मातृस्थानतः ।१। एवं सचित्तपिधानं सचित्तेन फलादिना पिधानं स्थगनमिति समासः भावार्थः प्राग्वत् ।२। कालातिक्रम इति कालस्यातिक्रमः कालातिक्रमः उचितो यो भिक्षाकालः साधूनां तमतिक्रम्य उल्लंघ्य भुंक्ते तदा च किं तेन लब्धेनापि कालातिक्रांतत्वात्तस्य उक्तं च ।

काले दिन्नस्स पहेणयस्स अग्घो ण तीरए काउं ।
तस्सेवकाले परिणामियस्स गिण्हंतया नत्थि ।३।

परव्यपदेश इति आत्मव्यतिरिक्तो योऽन्यः स परस्तद्व्य-पदेश इति समासः साधोः पौषधोपवासपारणकाले भिक्षार्थं समुपस्थितस्य प्रकटमन्नादि पश्यतः श्रावकोऽभिधत्ते परकीय-मिदमिति नात्मीयमतो न ददामि किंचिद्याचितो वाभिधत्ते विद्यमान एवामुकस्येदमस्ति तत्र गत्वा मार्गय तद्यूयमिति ।४। मात्सर्यमिति याचितः कुप्यते सदपि न ददाति परोन्नतिवै-मनस्यं च मात्सर्यमिति "तेन तावद्द्रमकेण याचितेन दत्तं, किमहं ततोऽपि न्यूनः" इति मात्सर्याद्ददाति कषायकलुषि-तेन वा चित्तेन ददतो मात्सर्यमिति ।५।

उक्तं च सातिचारं चतुर्थं शिक्षापदव्रतं अधुनैषामणुव्र-

तादिनां यानि यावत्कथिकानि यानि चेत्वराणि तदेतदाह—

**इत्थ उ समणोवासगधम्मे अणुव्वयगुणव्वयाइं च ।**
**आवकहियाइ सिक्खावयाइं पुण इत्तराइं ति।३२८।**

[ अत्र तु श्रमणोपासकधर्मे अनुव्रतानि गुणव्रतानि च ।
यावत्कथिकानि शिक्षाव्रतानि पुनरित्वराणीति ॥३२८॥]

अत्र पुनः श्रमणोपासकधर्मे तुशब्दः पुनःशब्दार्थः स चावधारणे अत्रैव न शाक्याद्युपासकधर्मे तत्र सम्यक्त्वाभावेन अणुव्रताद्यभावात् उपास्ते इत्युपासकः सेवक इत्यर्थः श्रमणानामुपासकस्तस्य धर्म इति समासः अणुव्रतानि गुणव्रतानि चेति पञ्चाणुव्रतानि प्रतिपादितस्वरूपाणि त्रीणि गुणव्रतानि उक्तलक्षणान्येव यावत्कथिकानीति सकृद्गृहीतानि यावज्जीवमपि भावनीयानि न तु नियोगतो यावज्जीवमेवेति गुरवो व्याचक्षते प्रतिचातुर्मासकमपि तद्ग्रहणं वृद्धपरंपरायाततया सामाचार्युपलब्धेः शिक्षापदव्रतानि पुनरित्वराणि शिक्षा अभ्यासस्तस्याः पदानि स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि इत्वराणीति तत्र प्रतिदिवसानुष्ठेये सामायिकदेशावकाशिके पुनः पुनरुच्चार्येते इति भावना पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयाविति ।

श्रावकधर्मे च प्रत्याख्यानभेदानां सप्तचत्वारिंशदधिकं भङ्गशतं भवति चित्रत्वाद्देशविरतेः, तदाह—

सीयालं भंगसयं गिहिपच्चक्खाणभेयपरिमाणं ।
तं च विहिणा इमेणं भावेयव्वं पयत्तेणं ॥३२९॥

[ सप्तचत्वारिंशदधिकं भङ्गशतं गृहिप्रत्याख्यानभेदपरिमाणं ।
तच्च विधिना अनेन भावयितव्यं प्रयत्नेन ॥३२९॥ ]

सप्तचत्वारिंशदधिकं शतं गृहिप्रत्याख्यानभेदानां परिमाणमियत्ता तच्च विधिना अनेन वक्ष्यमाणेन भावयितव्यं प्रयत्नेनावहितचेतोभिरिति । विधिमाह—

तिन्नि तिया तिन्नि दुया तिन्निकिक्का य हुंति जोगेसु ।
ति दु एक्कं ति दु एक्कं ति दु एक्कं चेव करणाइं ॥

[ त्रयस्त्रिकाः त्रयो द्विकाः त्रय एककाश्च भवन्ति योगेषु ।
त्रीणि द्वयमेकं त्रीणि द्वयमेकं त्रीणि द्वयमेकं चैव करणानि ॥३३०॥ ][1]

त्रयस्त्रिकास्त्रयो द्विकास्त्रय एककाश्च भवन्ति योगेषु कायवाग्मनोव्यापारलक्षणेषु त्रीणि द्वयमेकं ३ चैव करणानि मनोवाक्कायलक्षणानीति पदघटना । भावार्थस्तु स्थापनया निर्दिश्यते सा चेयं—

---

१ One MS. of the original text adds the following

गाथा—पढमे लब्भइ इक्को सेसेसु पएसु तिय तिय तिय चि।
दो नव तिय दो नवगा तिगुणिय सीयालभंगसयं ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| योगाः | ३ | ३ | ३ | २ | २ | २ | १ | १ | १ |
| करणानि | ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| | १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ |

कात्र भावना—न करेइ न कारवेइ करंतंपि अन्नं न समणुजाणइ मणेणं वायाए काएण एको भेओ $\frac{१}{१}$ ।१। इयाणिं बिइओ ण करेइ न कारवेड करंतंपि अन्नं न समणुजाणइ मणेणं वायाए एको $\frac{१}{२}$, मणेणं काएण $\frac{२}{३}$, तहा वायाए काएण $\frac{३}{४}$; बीओ मूलभेओ गओ ।२। इयाणिं तइयओ, ण करेइ ण करावेइ करंतं पि अन्नं न समणुजाणइ मणेणं $\frac{१}{५}$, वायाए $\frac{२}{६}$, काएणं $\frac{३}{७}$; ।३। इदानीं चतुर्थः न करेइ न कारवेइ मणेणं वायाए काएणं $\frac{१}{८}$, ण करेइ करंतं पि नाणुजाणइ $\frac{२}{९}$, ण कारवेइ करंतं पि नाणुजाणइ तइओ $\frac{३}{१०}$; चउत्थो मूलभेओ ।४। इदानीं पंचमो, न करेइ न कारवेइ मणेणं वायाए एक्को $\frac{१}{११}$, न करेइ करंतं नाणुजाणइ $\frac{२}{१२}$, ण कारवेइ करंतं नाणुजाणइ $\frac{३}{१३}$, एए तिन्नि वि भंगा मणेणं वायाए लद्धा; अन्ने वि तिन्नि मणेणं काएण य एवमेव लब्भंति $\frac{४}{१४}\frac{५}{१५}\frac{६}{१६}$; तहा अवरे वि वायाए काएण य लब्भंति $\frac{७}{१७}\frac{८}{१८}\frac{९}{१९}$; एवमेत्र एते सव्वे नव, पंचमोऽप्युक्तो मूलभेदः ।५। इयाणिं छट्ठो, ण करेइ ण कारवेइ मणेणं एक्को $\frac{१}{२०}$, तहा ण करेइ करंतं पि नाणुजाणइ मणेणं $\frac{२}{२१}$, ण कार-

वेइ करंतं नाणुजाणइ मनसैव तृतीयः $\frac{३}{२१}$; एवं वायाए $\frac{४}{२३}\frac{५}{२४}\frac{६}{२५}$ काएण य $\frac{७}{२६}\frac{८}{२७}\frac{९}{२८}$; सव्वे नव, उक्तो षष्ठो मूलभेदः ।६। इदानीं सप्तमोऽभिधीयते, ण करेइ मणेणं वायाए काएण य एको $\frac{१}{२९}$ एवं ण कारवेइ मणाईहिं $\frac{२}{३०}$, करंतं णाणुजाणइ $\frac{३}{३१}$; ।७। इदानीमष्टमो भण्यते न करेइ मणेण वायाए एको $\frac{१}{३२}$, तहा मणेण काएण य $\frac{२}{३३}$, तहा वायाए काएण य $\frac{३}{३४}$; एवं न करावेइ $\frac{४}{३५}\frac{५}{३६}\frac{६}{३७}$; करंतं नाणुजाणइ $\frac{७}{३८}\frac{८}{३९}\frac{९}{४०}$; सव्वे वि णव ।८। इदानीं नवमो भण्यते न करेइ मणेणं $\frac{१}{४१}$, न कारवेइ $\frac{२}{४२}$, करंतं नाणुजाणइ $\frac{३}{४३}$; एवं वायाए वि $\frac{४}{४४}\frac{५}{४५}\frac{६}{४६}$; काएण वि $\frac{७}{४७}\frac{८}{४८}\frac{९}{४९}$; सव्वे वि नव नवमो मूलभेदः ।९। आगत-गुणनेदानीं क्रियते ॥

लद्धफलमाणमेयं भंगाउ भवंति अउणपन्नासं ।
तीयाणागयसंपयगुणियं कालेण होइ इमं ॥

सीयालं भंगसयं कह कालतिएण होइ गुणणाउ ।
तीयस्स पडिक्कमणं पच्चुप्पन्नस्स संवरणम् ॥

पच्चक्खाणं व तहा होइ य एस्सस्स एस गुणणाओ ।
कालतिएण य भणियं जिणगणहरवायगेहिं च ॥ इति

उक्तभङ्गकानामाद्यभङ्गस्वरूपाभिधित्सयाह ।

**न करइ न करावेइ य करंतमन्नं पि नाणुजाणेइ ।**
**मणवयकायेणिक्को एवं सेसा वि जाणिज्जा ॥३२१**

[ न करोति न कारयति कुर्वन्तमन्यमपि नानुजानाति ।
मनोवाक्कायैः एकः एवं शेषानपि जानीयात् ॥३३१॥ ]

न करोति स्वयं न कारयत्यन्यैः कुर्वन्तमन्यमपि स्वनिमित्तं स्वयमेव नानुजानाति कथं मनोवाक्कायैर्मनसा वाचा कायेन चेत्येवमेको विकल्पः, एवं शेषानपि द्व्यादीन् जानीयात् यथोक्तान् प्रागिति । अत्राह–

न करेईच्चाइतियं गिहिणो कह होइ देसविरयस्स ।
भन्नइ विसयस्स बहिं पडिसेहो अणुमईए वि॥३३२॥

[ न करोति इत्यादित्रिकं गृहिण' कथं भवति देशविरतस्य ।
भण्यते विषयाद्बहिः प्रतिषेधो अनुमतेरपि ॥३३२॥ ]

न करोतीत्यादित्रिकं अनन्तरोक्तं गृहिणः श्रावकस्य कथं भवति देशविरतस्य विरताविरतस्य सावद्ययोगेष्वनुमतेरव्यवच्छिन्नत्वात्, नैव भवतीत्यभिप्रायः एवं चोदकाभिप्रायमाशङ्क्य गुरुराह, भण्यते तत्र प्रतिवचनं विषयाद्बहि' प्रतिषेधोऽनुमतेरपि, यत आगतं भाण्डाद्यपि न गृह्णातीत्यादाविति, अत्रैवं व्यवस्थिते सति–

केई भणंति गिहिणो तिविहं तिविहेण नत्थि संवरणं ।
तं न जओ निद्दिट्ठं पन्नत्तीए विसेसेउं ॥३३३॥

[ केचन भणन्ति गृहिणः त्रिविधं त्रिविधेन नास्ति संवरणम् ।
तन्न यतो निर्दिष्टं प्रज्ञप्तौ विशिष्य ॥३३३॥ ]

केचनार्हन्मतानुसारिण एवापरिणतसिद्धान्ता भणन्ति, किं गृहिणः त्रिविधं न करोतीत्यादि त्रिविधेन मनसेत्यादिना नास्ति संवरणं न विद्यते प्रत्याख्यानं तच्च तदेतदयुक्तं, किमिति यतो निर्दिष्टं प्रज्ञप्तौ भगवत्यां विशेषः (विशिष्य !) अविषये " तिविहं पि " इत्यादिनेत्याह ।

ता कह निज्जुत्तीए णुमतिनिसेहु त्ति से सविसयम्मि ।
सामन्ने वान्नत्थ उ तिविहं तिविहेण को दोसो॥२३४॥

[ तत्कथं निर्युक्तौ अनुमतिनिषेध इति स स्वविषये ।
सामान्ये वा अन्यत्र तु त्रिविधं त्रिविधेन को दोषः२३४ ]

यद्येवं तत्कथं निर्युक्तौ प्रत्याख्यानसंज्ञितायां अनुमतिनिषेध इति " दुविहं तिविहेण पढमउ " इत्यादिवचनेन । अत्रोच्यते । स स्वविषये यत्रानुमतिरस्ति तत्र तन्निषेधः सामान्ये वा प्रत्याख्याने स इति, अन्यत्र तु विशेषे स्वयंभूरमणजलधिमत्स्यादौ त्रिविधं त्रिविधेन कुर्वतः को दोषो, न कश्चिदिति । परिहारान्तरमाह—

पुत्ताइसंतइनिमित्तमित्तमेगारसिं पवन्नस्स ।
जंपंति केइ गिहिणो दिक्खाभिमुहस्स तिविहंपि२३५

[ पुत्रादिसन्ततिनिमित्तमात्रम् एकादशीं प्रपन्नस्य ।
जल्पन्ति केचन गृहिणो दीक्षाभिमुखस्य त्रिविधमपि ३३५ ]

पुत्रादिसन्ततिनिमित्तमात्रं प्रव्रजितोऽस्य पितेत्येवं विज्ञाय परिभवन्ति केचन तत्सुतं अप्रव्रजिते तु न एतावद्भिश्चाहोभिरसौ मानुषीभवत्येवेति तत ऊर्ध्वं गुणमुपलभ्य एतन्निमित्तं प्रविव्रजिषुरपि कश्चित्पर्यन्तवर्तिनीमुपासकप्रतिमां प्रतिपद्यत इति तदाह एकादशीं प्रपन्नस्य श्रवणभूताभिधानामुपासकप्रतिमामाश्रितस्य जल्पन्ति केचन गृहिणो दीक्षाभिमुखस्य त्रिविधमपि प्रत्याख्यानमिति ।

आह कहं पुण मणसा करणं कारावणं अणुमई य ।
जह वइतणुजोगेहिं करणाई तह भवे मणसा॥३३६॥

[आह कथं पुनर्मनसा करणं कारणं अनुमतिश्च ।
यथा वाक्तनुयोगाभ्यां करणादय. तथा भवेत् मनसा३३६]

आह चोदकः कथ पुनर्मनसा करणं कारणमनुमतिश्चान्तर्व्यापारत्वेन परैरनुपलक्ष्यमाणत्वादनुपपत्तिरित्यभिप्रायः । गुरुराह । यथा वाक्तनुयोगाभ्यां करणादयः करणकारणानुमोदनानि तथा भवेद् मनमापिति कथमित्याह ।

तयहीणत्ता वयतणुकरणाईण अहवा उ मणकरणं ।
सावज्जजोगमणणं पन्नत्तं वीयरागेहिं ॥३३७॥

[तदधीनत्वात् वाक्तनुकरणादीनां अथवा तु मनःकरणं ।
सावद्ययोगमननं प्रज्ञप्तं वीतरागैः ॥३३७॥]

तदधीनत्वादिति मनोयोगाधीनत्वात् वाक्तनुकरणादीनां तेन ह्यालोच्य वाचा कायेन वा करोति कारयति चेत्यादि अभिसंधिमन्तरेण प्रायस्तदनुपपत्तेः। प्रकारान्तरं चाह। अथवा मनःकरणं किं सावद्ययोगमननं करोम्यहं एतदिति सपापव्यापारचिन्तनं प्रज्ञप्तं वीतरागैरिति॥

कारवणं पुण मणसा चिंतेइ करेउ एस सावज्जं।
चिंतेई य कए पुण सुट्ठुकयं अणुमई होइ॥३३८॥

[ कारवणं पुनर्मनसा चिन्तयति करोतु एष सावद्यम्।
चिन्तयति च कृते पुनः सुष्ठुकृतमनुमतिर्भवति॥३३८॥]

कारवणं पुनर्मनसा चिन्तयति करोतु एष सावद्यं असावपि चेङ्गितज्ञोऽभिप्रायात्प्रवर्तत एव, चिन्तयति च कृते पुनः सुष्ठुकृतमनुमतिर्भवति मानसी अभिप्रायज्ञो विजानात्यपीति।

उक्तः प्रत्याख्यानावधिरधुना श्रावकस्यैव निवासादिविषयां सामाचारीं प्रतिपादयन्नाह—

निवसिज्ज तत्थ सड्ढो साहूणं जत्थ होइ संपाओ।
चेइयघराइ जत्थ य तयन्नसाहम्मिया चेव॥३३९॥

[ निवसेत्तत्र श्राद्धः साधूनां यत्र भवति संपातः।
चैत्यगृहाणि च यस्मिन् तदन्यसाधर्मिकाश्चैव॥३३९॥]

निवसेत्तत्र नगरादौ श्रावकः साधूनां यत्र भवति संपातः संपतनं संपातः आगमनमित्यर्थः । चैत्यगृहाणि च यस्मिंस्त-दन्या सार्धर्मिकाश्चैव श्रावकादय इति गाथासमासार्थः ।

अधुना प्रतिद्वारं गुणा उच्यन्ते तत्र साधुसंपाते गुणानाह—

साहूण वंदणेणं नासइ पावं असंकिया भावा ।
फासुयदाणे निज्जर उवग्गहो नाणमाईणं ॥३४०॥

[ साधूनां वन्दनेन नश्यति पापं अशंकिता भावाः ।
प्रासुकदाने निर्जरा उपग्रहो ज्ञानादीनाम् ॥३४०॥ ]

साधूनां वन्दनेन करणभूतेन किं नश्यति पापं गुणेषु बहुमानात्तथा अशङ्किता भावास्तत्समीपे श्रवणात् प्रासुकदाने निर्जरा कुतः उपग्रहो ज्ञानादीनां ज्ञानादिमन्त एव साधव इति । उक्ताः साधुसंपाते गुणाः । चैत्यगृहे गुणानाह—

मिच्छादंसणमहणं सम्मद्दंसणविसुद्धिहेउं च ।
चिइवंदणाइ विहिणा पन्नत्तं वीयरागेहिं ॥३४१॥

[ मिथ्यादर्शनमथनं सम्यग्दर्शनविशुद्धिहेतु च ।
चैत्यवन्दनादि विधिना प्रज्ञप्तं वीतरागैः ॥३४१॥ ]

मिथ्यादर्शनमथनं मिथ्यादर्शनं विपरीतपदार्थश्रद्धानरूपं मथ्यते विलोड्यते येन तत्तथा न केवलमपायनिबन्धनकदर्थन-मेव किन्तु कल्याणकारणोपकारि चेत्याह सम्यग्दर्शनविशुद्धि-

हेतु च सम्यगविपरीतं तत्त्वार्थश्रद्धानलक्षणं दर्शनं सम्यग्दर्शनं मोक्षादिसोपानं तद्विशुद्धिकरणं च किं तच्चैत्यवन्दनादि आदिशब्दात्पूजादिपरिग्रहः विधिना सूत्रोक्तेन प्रज्ञप्तं प्ररूपितं वीतरागैरर्हद्भिः स्थाने शुभाध्यवसायप्रवृत्तेरेतच्च चैत्यगृहे सति भवतीति गाथार्थः। उक्ताश्चैत्यगृहगुणाः सांप्रतं समानधार्मिकगुणानाह—

साहम्मियथिरकरणं वच्छल्ले सासणस्स सारो[1] त्ति।
मग्गसहायत्तणओ तहा अणाओ य धम्माओ ।३४२।

[ साधर्मिकस्थिरीकरणं वात्सल्ये शासनस्य सार इति।
मार्गसहायत्वात्तथा अनाशश्च धर्मात् ॥३४२॥ ]

समानधार्मिकस्थिरीकरणमिति यदि कश्चित्कथंचिद्धर्मात् प्रच्यवते ततस्तं स्थिरीकरोति महांश्चायं गुणः तथा वात्सल्ये क्रियमाणे शासनस्य सार इति सार आसेवितो भवति उक्तं च " जिणसासणस्स सारो " इत्यादि सति च तस्मिन् वात्सल्यमिति तथा तेन तेनोपबृंहणादिना प्रकारेण सम्यग्दर्शनादिलक्षणमार्गसहायत्वादनाशश्च भवति कुतो धर्मात्तत एवेति गाथार्थः।

उक्ताः समानधार्मिकगुणा सांप्रतं तत्र निवसतो विधि-

---

१ (अ) सार आसेवितो भवति उक्तजिणसासणस्स सारो इत्यादि।
(ब) सारश्च सेवेतो भवता उत्तापगागण भासण सरो इत्यादि।

रूच्यते तत्रापि च प्रायो भावसुप्ताः श्रावकाः ये प्राप्यापि जिन-मतं गार्हस्थमनुपालयन्त्यतो निद्रावबोधद्वारेणाह–

**नवकारेण विबोहो अणुसरणं सावओ वयाइंमि ।**
**जोगो चिइवंदणमो पच्चक्खाणं च विहिपुव्वं ।३४३।**

[ नमस्कारेण विबोधः अनुस्मरणं श्रावकः व्रतादौ ।
योगः चैत्यवन्दनं प्रत्याख्यानं च विधिपूर्वकम् ॥३४३॥]

नमस्कारेण विबोध इति सुप्तोत्थितेन नमस्कारः पठितव्यः तथानुस्मरणं कर्तव्यं श्रावकोऽहमिति व्रतादौ विषये ततो योगः कायिकादिः चैत्यवन्दनमिति प्रयत्नेन चैत्यवन्दनं कर्तव्यं ततो गुर्वादीनमिवन्द्य प्रत्याख्यानं च विधिपूर्वकं सम्यगाकारशुद्धं ग्राह्यमिति ।

**गोसे सयमेव इमं काउं तो चेइयाण पूयाई ।**
**साहुसगासे कुज्जा पच्चक्खाणं अहागहियं ॥३४४॥**

[ प्रत्युषसि स्वयमेव इदं कृत्वा ततः चैत्यानां पूजादीनि ।
साधुसकाशे कुर्यात्प्रत्याख्यानं यथागृहीतम् ॥३४४॥ ]

गोसे प्रत्युषसि स्वयमेवेदं कृत्वा गृहादौ ततश्चैत्यानां पूजादीनि संमार्जनोपलेपपुष्पधूपादिसंपादनादि कुर्यात्ततः साधु-सकाशे कुर्यात्किं प्रत्याख्यानं यथागृहीतमिति ।

अत्र केचिदनधिगतसम्यगागमा ब्रुवत इति चोदकमुखेन तदभिप्रायमाह—

**पूयाए कायवहो पडिकुट्ठो सो अ नेव पुज्जाणं ।**
**उवगारिणि त्ति तो सा नो कायव्व त्ति चोएइ ॥३४५॥**

[ पूजायां कायवधः, प्रतिकुष्टः स च, नैव पूज्यानाम् ।
उपकारिणी इति तत् सा न कर्तव्या इति चोदयति ३४५]

पूजायां भगवतोऽपि किल क्रियमाणायां कायवधो भवति पृथिव्याद्युपमर्दमन्तरेण तदनुपपत्तेः, प्रतिकुष्टः स च कायवधः "सव्वे जीवा न हंतव्वे" त्यादि वचनात् किं च न च पूज्यानामर्हतां तच्चैत्यानां वा उपकारिणी पूजा अर्हतां कृतकृत्यत्वात् तच्चैत्यानामचेतनत्वात् इतिशब्दो यस्मादर्थे यस्मादेवं ततस्तस्मादेव पूजा न कर्तव्येति चोदक इति अत्राह—

**आह गुरू पूयाए कायवहो होइ जइ वि हु[1] जिणाणं ।**
**तह वि तई कायव्वा परिणामविसुद्धिहेऊओ ॥३४६॥**

[ आह गुरुः पूजायां कायवधः भवत्येव यद्यपि जिनानाम् ।
तथापि सा कर्तव्या परिणामविशुद्धिहेतुत्वात् ॥३४६॥ ]

आह गुरुरित्युक्तवानाचार्यः पूजायां क्रियमाणायां कायवधः पृथिव्याद्युपमर्दो यद्यपि भवत्येव जिनानां रागादिजेतृ-

---

१ कायवहो जइ वि होइ उ जिणाणं ।

णामित्यनेन तस्याः सम्यग्विषयमाह । तथाप्यसौ पूजा कर्त-व्यैव कुतः परिणामविशुद्धिहेतुत्वादिति न चायं हेतुरसिद्ध इति परिहरति—

**भणियं च कूवनायं दव्वत्थवगोयरं इहं सुत्ते ।**
**निययारंभपवत्ता जं च गिही तेण कायव्वा ॥३४७॥**

[ भणितं च कूपज्ञातं द्रव्यस्तवगोचरं इह सूत्रे ।
नियतारम्भप्रवृत्ता यच्च गृहिणः तेन कर्तव्या ॥३४७॥]

भणितं च प्रतिपादितं च कूपज्ञातं कूपोदाहरणं किं विष-यमित्याह द्रव्यस्तवगोचरं द्रव्यस्तवविषयं इह सूत्रे जिनागमे "दव्वत्थए कूवदिट्ठंतो" इति वचनात्, तृडपनोदार्थं कूप-खननेऽधिकतरपिपासाश्रमादिसंभवेऽप्युद्भवति तत एव काचि-च्छिरा यदुदकाच्छेषकालमपि तृडाद्यपगम इति एवं द्रव्यस्त-वप्रवृत्तौ सत्यपि पृथिव्याद्युपमर्दे पूज्यत्वाद्भगवत उपायत्वात्त-त्पूजाकरणस्य श्रद्धावतः समुपजायते तथाविधः शुभः परि-णामो यतोऽशेषकर्मक्षपणमपीति । उपपत्त्यन्तरमाह । नियतार-म्भप्रवृत्ता यच्च गृहिण इत्यनवरतमेव प्रायस्तेषु तेषु परलोक-प्रतिकूलेष्वारम्भेषु प्रवृत्तिदर्शनात् तेन कर्तव्या पूजा कायव-धेऽपि उक्तवदुपकारसम्भवात् तावन्तीं वेलामधिकतराधिकरणाभा-वादिति । यदुक्तं न च पूज्यानामुपकारिणीत्येतत्परिजिहीर्ष-याह—

**उवगाराभावंमि वि पुज्जाणं पूयगस्स उवगारो ।**
**मंताइसरणजलणाइसेवणे जह तहेहं पि ॥३४८॥**

[ उपकाराभावेऽपि पूज्यानां पूजकस्य उपकारः ।
मंत्रादिस्मरणज्वलनादिसेवने यथा तथेहापि ॥३४८॥ ]

उक्तन्यायादुपकाराभावेऽपि पूज्यानामर्हदादीनां पूजकस्य पूजाकर्तुरुपकारः । दृष्टान्तमाह । मन्त्रादिस्मरणज्वलनादिसेवने यथेति तथाहि मन्त्रे स्मर्यमाणे न कश्चित्तस्योपकारोऽथ च स्मर्तुर्भवत्येवं ज्वलने सेव्यमाने न कश्चित्तस्योपकारोऽथ च तत्सेवकस्य भवति शीतापनोदादिदर्शनात् आदिशब्दाच्चिन्तामण्यादिपरिग्रहः तथेहापीति यद्यप्यर्हदादीनां नोपकारः तथापि पूजकस्य शुभाध्यवसायादिर्भवति तथोपलब्धेरिति । किं च—

**देहाइनिमित्तं पि हु जे कायवहंमि तह पयट्टंति ।**
**जिणपूयाकायवहंमि तेसि पडिसेहणं मोहो ॥३४९॥**

[ देहादिनिमित्तमपि ये खलु कायवधे तथा प्रवर्तन्ते ।
जिनपूजाकायवधे तेषां प्रतिषेधनं मोहः ॥३४९॥ ]

देहादिनिमित्तमप्यसारशरीरहेतोरपीत्यर्थः ये कायवधे पृथिव्याद्युपमर्दे तथा प्रवर्तंते तथेति झटिति कृत्वा जिनपूजाकाय-

---

१ शरीरार्थमपि ।

वधे तेषां प्रतिषेधनं मोहो अज्ञानं न हि ततो भगवत्पूजा न शोभनेति निगमयन्नाह–

सुत्तभणिएण विहिणा गिहिणा निव्वाणमिच्छमाणेण।
लोगुत्तमाण पूया निच्चं चिय होइ कायव्वा॥३५०॥

[ सूत्रभणितेन विधिना गृहिणा निर्वाणमिच्छता ।
लोकोत्तमानां पूजा नित्यमेव भवति कर्तव्या ॥३५०॥ ]

सूत्रभणितेनागमोक्तेन विधिना यतनालक्षणेन गृहिणा श्रावकेन निर्वाणमिच्छता मोक्षमभिलषता लोकोत्तमानामर्हदादीनां पूजा अभ्यर्थनादिरूपा नित्यमेव भवति कर्तव्या ततश्च न युक्तः प्रतिषेध इति ।

अवसितमानुषङ्गिकं सांप्रतं यदुक्तं साधुसकाशे कुर्यात्प्रत्याख्यानं यथागृहीतमित्यत्र तत्करणे गुणमाह–

गुरुसक्खिओ उ धम्मो संपुन्नविही कयाइ य विसेसो ।
तित्थयराण य आणा साहुसमीवंमि वोसिरउ ॥३५१॥

[ गुरुसाक्षिक एव धर्मः संपूर्णविधिः कदाचिच्च विशेषः ।
तीर्थकराणां च आज्ञा साधुसमीपे व्युत्सृजतः ॥३५१॥ ]

गुरुसाक्षिक एव धर्म इत्यतः स्वयं गृहीतमपि तत्सकाशे ग्राह्यमिति तथा संपूर्णविधिरित्थमेव भवतीत्यभिप्रायः कदाचिच्च विशेषः प्रागप्रत्याख्यातमपि किंचित्साधुसकाशे संवेगे

प्रत्याख्यातीति तीर्थंकराणां चाज्ञा संपादिता भवतीत्येते गुणाः साधुसमीपे व्युत्सृजतः प्रत्याख्यानं कुर्वत इति सामाचारी–शेषमाह ।

**सुणिऊण तओ धम्मं अहाविहारं च पुच्छिउमिसीणं ।**
**काऊण य करणिज्जं भावम्मि तहा ससत्तीए ॥३५२॥**

[ श्रुत्वा ततो धर्मं यथाविहारं च पृष्ट्वा ऋषीणाम् ।
कृत्वा च करणीयं भावे तथा स्वशक्त्या ॥३५२॥ ]

श्रुत्वा ततो धर्मं क्षान्त्यादिलक्षणं साधुसकाशे इति गम्यते यथाविहारं च तथाविधचेष्टारूपं पृष्ट्वा ऋषीणां संबन्धिनं, कृत्वा च करणीयं ऋषीणामेव संबन्धि भाव इत्यस्तितायां करणीयस्य स्वशक्त्या स्वविभवाद्यौचित्येनेति ।

**तत्तो अणिंदियं खलु काऊण जहोचियं अणुट्ठाणं ।**
**भुत्तूण जहा विहिणा पच्चक्खाणं च काऊण ॥३५३॥**

[ ततः अनिंद्यं खलु कृत्वा यथोचितमनुष्ठानम् ।
भुक्त्वा यथाविधिना प्रत्याख्यानं च कृत्वा ॥३५३॥ ]

ततस्तदनन्तरमनिन्द्यं खलु इहलोकपरलोकानिन्द्यमेव कृत्वा यथोचितमनुष्ठानं यथा वाणिज्यादि तथा भुक्त्वा यथाविधिना अतिथिसविभागसंपादनादिना प्रत्याख्यानं च कृत्वा तदनन्तर-मेव पुनर्भोगेऽपि ग्रन्थिसहितादीनि ।

सेविज्ज तओ साहू करिज्ज पूयं च वीयरागाणं ।
चिइवंदण सगिहागम पइरिक मि य तुयट्टिज्जा ।।

[ सेवेत ततः साधून् कुर्यात्पूजां च वीतरागाणाम् ।
चैत्यवन्दनं स्वगृहागमनं तथा एकान्ते त्वग्वर्तनम् ३५४ ]

सेवेत ततः साधून् पर्युपासनविधिना कुर्यात् पूजां च वीतरागाणां स्वविभवौचित्येन ततश्चैत्यवन्दनं कुर्यात् ततः स्वगृहागमनं तथैकान्ते तु त्वग्वर्तनं कुर्यात्स्वपेदिति। कथमित्याह

उस्सग्गबंभयारी परिमाणकडो उ नियमओ चेव ।
सरिऊण वीयरागे सुत्तविबुद्धो विचिंतिज्जा।।३५५।।

[ उत्सर्गतः ब्रह्मचारी कृतपरिमाणस्तु नियमादेव च ।
स्मृत्वा वीतरागान् सुप्तविबुद्धः विचिन्तयेत् ।।३५५।। ]

उत्सर्गतः प्रथमकल्पेन ब्रह्मचारी आसेवनं प्रति कृतपरिमाणस्तु नियमादेव आसेवनपरिमाणाकरणे महामोहदोषात् तथा स्मृत्वा वीतरागान् सुप्तविबुद्धः सन् विचिन्तयेद्वक्ष्यमाणमिति।

भूएसु जंगमत्तं तेसु वि पंचेन्दियत्तमुकोसं ।
तेसु वि अ माणुसत्तं मणुयत्ते आरिओ देसो।।३५६।।

[ भूतेषु जंगमत्वं तेष्वपि पञ्चेन्द्रियत्वमुत्कृष्टम् ।
तेष्वपि च मानुषत्वं मनुजत्वे आर्यो देशः ।।३५६।। ]

भूतेषु प्राणिषु जंगमत्वं द्वीन्द्रियादित्वं तेष्वपि पञ्चेन्द्रियत्वमुत्कृष्टं प्रधानं तेष्वपि पञ्चेन्द्रियेषु मानुषत्वमुत्कृष्टमिति वर्त्तते मनुजत्वे आर्यो देश उत्कृष्ट इति ।

देसे कुलं पहाणं कुले पहाणे य जाइ उक्कोसा ।
तीइवि रूवसमिद्धी रूवे य बलं पहाणयरं ॥३५७॥

[ देशे कुलं प्रधानं कुले प्रधाने च जातिरुत्कृष्टा ।
तस्यामपि रूपसमृद्धिः रूपे च बलं प्रधानतरम् ॥३५७॥]

देशे आर्ये कुलं प्रधानं उग्रादि, कुले प्रधाने च जातिरुत्कृष्टा मातृसमुत्था तस्यामपि जातौ रूपसमृद्धिरुत्कृष्टा सकलाङ्गनिष्पत्तिरित्यर्थः रूपे च सति बलं प्रधानतरं सामर्थ्यमिति ।

होइ बले वि य जीयं जीए वि पहाणयं तु विन्नाणं ।
विन्नाणे सम्मत्तं सम्मत्ते सीलसंपत्ती ॥३५८॥

भवति बलेऽपि च जीवितं प्रधानतरमिति योगः, जीवितेऽपि च प्रधानतरं विज्ञानं विज्ञाने सम्यक्त्वं क्रिया पूर्ववत् सम्यक्त्वे शीलसंप्राप्तिः प्रधानतरेति ।

सीले खाइयभावो खाइयभावे य केवलं नाणं ।
केवलिए पडिपुन्ने पत्ते परमक्खरे मुक्खो ॥३५९॥

शीले क्षायिकभावः प्रधानः क्षायिकभावे च केवलज्ञानं,

प्रतिपक्षयोजना सर्वत्र कार्येति कैवल्ये प्रतिपूर्णे प्राप्ते परमाक्षरे मोक्ष इति ।

**न य संसारम्मि सुहं जाइजरामरणदुक्खगहियस्स ।**
**जीवस्स अत्थि जम्हा तम्हा मुक्खो उवादेओ ३६०**

[ न च संसारे सुखं जातिजरामरणदुःखगृहीतस्य ।
जीवस्यास्ति यस्मादेवं तस्मान्मोक्ष उपादेयः ॥३६०॥]

किंविशिष्ट इत्याह–

**जच्चाइदोसरहिओ अव्वाबाहसुहसंगओ इत्थ ।**
**तस्साहणसामग्गी पत्ता य मए बहू इन्हि ॥३६१॥**

[ जात्यादिदोषरहितोऽव्याबाधसुखसंगतोऽत्र ( संसारे )
तत्साधनसामग्री प्राप्ता च मया बह्विदानीम् ॥३६१॥ ]

**ता इत्थ जं न पत्तं तयत्थमेवुज्जमं करेमित्ति ।**
**विबुहजणनिंदिएणं किं संसाराणुबंधेणं ॥३६२॥**

[ तदत्र (सामग्र्यां) यन्न प्राप्तं तदर्थमेवोद्यमं करोमीति ।
विबुधजननिन्दितेन किं संसारानुबन्धेन ॥३६२॥ ]

इति निगदसिद्धो गाथात्रयार्थः इत्थं चिन्तनफलमाह–

**वेरग्गं कम्मक्खय विसुद्धनाणं च चरणपरिणामो ।**
**थिरया आउ य बोही इय चिंताए गुणा हुंति।३६३।**

[ वैराग्यं कर्मक्षयः विशुद्धज्ञानं च चरणपरिणामः ।
स्थिरता आयुः च बोधिः इत्थं चिन्तायां गुणा भवन्ति॥३६३॥ ]

इत्थं चिन्तयतो वैराग्यं भवत्यनुभवसिद्धमेवैतत् तथा कर्मक्षयः तत्त्वचिन्तनेन प्रतिपक्षत्वात् विशुद्धज्ञानं च निबन्धनहानेः चरणपरिणामः प्रशस्ताध्यवसायत्वात् स्थिरता धर्मे प्रतिपक्षासारदर्शनात् आयुरिति कदाचित्परभवायुष्कबन्धस्ततस्तच्छुभत्वात्सर्वं कल्याणं बोधिरित्थं तत्त्वभावनाभ्यासादेवं चिन्तायां क्रियमाणायां गुणा भवन्त्येवं चिन्तया वेति।

**गोसम्मि पुव्वभणिओ नवकारेणं विबोहमाईओ।**
**इत्थ विही गमणम्मि य समासओ संपवक्खामि।३६४।**

गोसे ( प्रत्युषसि ) पूर्वभणितो नमस्कारेण विबोधादिः। अत्र विधिः (इति) गमने च समासतः संप्रवक्ष्यामि॥ विधिमिति।

**अहिगरणखामणं खलु चेइयसाहूणं वंदणं चेव।**
**संदेसम्मि विभासा जइगिहिगुणदोसविक्खाए।३६५।**

[ अधिकरणक्षामणं खलु चैत्यसाधूनां वन्दनमेव च।
संदेशे विभाषा यतिगृहिगुणदोषापेक्षया ॥३६५॥]

अधिकरणक्षामणं खलु माभूत्तत्र मरणादौ वैरानुबन्ध इति, तथा चैत्यसाधूनामेव च वन्दनं नियमतः कुर्यात् गुणदर्शनात्,

संदेशे विभाषा यतिगृहिगुणदोषापेक्षयेति यतः संदेशको नीयते न सावद्यो गृहस्थस्य इति चैत्यसाधूनां वन्दनं चेति यदुक्तं तद्विस्फारयति ।

**साहूण सावगाण य सामायारी विहारकालंमि ।**
**जत्थत्थि चेइयाइं वंदावंति तहिं संघं ॥३६६॥**

[ साधूनां श्रावकानां च सामाचारी विहरणकाले ।
यत्र सन्ति चैत्यानि वन्दयन्ति तत्र संघम् ॥३६६॥ ]

साधूनां श्रावकाणां चोक्तशब्दार्थानां ( २, ) सामाचारी व्यवस्था कदा विहरणकाले विहरणसमये किंविशिष्टेत्याह यत्र स्थाने सन्ति चैत्यानि वन्दयन्ति तत्र संघं चतुर्विधमपि प्रणिधानं कृत्वा स्वयमेव वदन्त इति ।

**पढमं तओ य पच्छा वंदंति सयं सिया ण वेल त्ति ।**
**पढमं चिय पणिहाणं करंति संघंमि उवउत्ता ॥३६७॥**

[ प्रथमं ततश्च पश्चात् वन्दन्ते स्वयं स्यान्न वेला इति ।
प्रथममेव प्रणिधानं कुर्वन्ति संघे उपयुक्ताः ॥३६७॥ ]

प्रथममिति पूर्वमेव सङ्घं वन्दयन्ति ततः पच्छात्सङ्घवन्दनोत्तरकालं वंदन्ते स्वयमात्मना आत्मनिमित्तमिति स्यान्न वेलेति स्तेनादिभयसार्थगमनादौ तत्रापि प्रथममेव वन्दने प्रणि-

धानं कुर्वन्ति संघविषयमुपयुक्ताः संघं प्रत्येतद्वन्दनं संघोऽयं वन्दत इति।

पच्छा कयपणिहाणा विहरंता साहुमाइ दट्ठूण।
जंपंति अमुगठाणे देवे वंदाविया तुब्भे ॥३६८॥

[पश्चात् कृतप्रणिधाना विहरन्तः साध्वादीन्दृष्ट्वा।
जल्पन्ति अमुकस्थाने देवान् वंदिता यूयम् ॥३६८॥]

पश्चात्तदुत्तरकालं कृतप्रणिधानाः सन्तस्तदर्थस्य संपादितत्वाद्विहरन्तः सन्तः साध्वादीन् दृष्ट्वा साधुं साध्वीं श्रावकं श्राविकां वा जल्पन्ति व्यक्तं च भणन्ति किं अमुकस्थाने मथुरादौ देवान्वन्दिता यूयमिति।

ते वि य कयंजलिउडा सद्धासंवेगपुलइयसरीरा।
अवणामिउत्तमंगा तं बहु मन्नंति सुहझाणा ॥३६९॥

[तेऽपि च कृताञ्जलिपुटाः श्रद्धासंवेगपुलकितशरीराः।
अवनामितोत्तमांगाः तद् बहु मन्यन्ते शुभध्यानाः ३६९]

तेऽपि च साध्वादयः कृताञ्जलिपुटा रचितकरपुटाञ्जलयः श्रद्धासंवेगपुलकितशरीराः श्रद्धाप्रधानसंवेगतो रोमाञ्चितवपुषोऽवनामितोत्तमाङ्गाः सन्तस्तद्वन्दनं बहु मन्यन्ते शुभध्यानाः प्रशस्ताध्यवसाया इत्युभयोः फलमाह।

तेसिं पणिहाणाओ इयरेसिं पि य सुभाउ झाणाओ ।
पुन्नं जिणेहिं भणियं नो संकमउ त्ति ते मेरा ॥३७०॥

[ तेषां प्रणिधानात् इतरेषामपि च शुभाद्ध्यानात् ।
पुण्यं जिनैर्भणितं न संक्रमतः इति अतो मर्यादा ॥३७०॥]

तेषामाद्यानां वन्दननिवेदकानां प्रणिधानात्तथाविधकुशलचित्तादितरेषामपि च वन्द्यमानानां शुभध्यानात्तच्छ्रवणप्रवृत्त्या पुण्यं जिनैर्भणितं अर्हद्भिरुक्तं न च संक्रमत इति न निवेदकपुण्यं निवेद्यसंक्रमेण यतश्चैवमतो मर्यादेयमवश्यं कार्येति । विपर्यये दोषमाह ।

जे पुणऽकयपणिहाणा वंदित्ता नेव वा निवेयंति ।
पच्चक्खमुसावाई पावा हु जिणेहिं ते भणिया ।३७१।

[ ये पुनरकृतप्रणिधाना वंदित्वा नैव वा निवेदयन्ति ।
प्रत्यक्षमृषावादिनः पापा एव जिनैः ते भणिताः ॥३७१॥ ]

ये पुनरनाभोगादितो अकृतप्रणिधाना वंदित्वा नैव वा वन्दित्वा निवेदयन्ति अमुकस्थाने देवान्वन्दिता यूयमिति प्रत्यक्षमृषावादिनोऽकृतनिवेदनात्पापा एव जिनैस्ते भणिता मृषावादित्वादेवेति ।

जे वि य कयंजलिउडा सद्धासंवेगपुलइयसरीरा ।
बहु मन्नंति न सम्मं वंदणगं ते वि पाव त्ति॥३७२॥

[ येऽपि च कृताञ्जलिपुटाः श्रद्धासंवेगपुलकितशरीराः ।
बहु मन्यन्ते न सम्यग्वन्दनकं तेऽपि पापा इति ३७२ ]

येऽपि च साध्वादयो निवेदिते सति कृताञ्जलिपुटाः श्रद्धा-संवेगपुलकितशरीरा इति पूर्ववत्र बहु मन्यन्ते न सम्यक् वन्द-नकं कुर्वन्ति तेऽपि पापा गुणवति स्थानेऽवज्ञाकरणादिति । क्वचिद्वेलाभावेऽपि विधिमाह—

जइ वि न वंदणवेला तेणाइभएण चेइए तहवि ।
दट्ठुणं पणिहाणं नवकारेणावि संघंमि ॥३७३॥

[ यद्यपि न वन्दनवेला स्तेनादिभयेषु चैत्यानि तथापि ।
दृष्ट्वा प्रणिधानं नमस्कारेणापि संघे ॥३७३॥ ]

यद्यपि क्वचिच्छून्यादौ न वन्दनवेला स्तेनश्वापदादिभयेषु चैत्यानि तथापि दृष्ट्वा अवलोकननिबन्धनमपि प्रणिधानं नमस्कारेणापि संघ इति सङ्घविषयं कार्यमिति ।

तंमि य कए समाणे वंदावणगं निवेइयव्वं ति ।
तयभावंमि पमादा दोसो भणिओ जिणिंदेहिं ३७४

[ तस्मिन्नपि कृते सति वन्दनं निवेदयितव्यमिति ।
तदभावे प्रमादात् दोषः भणितः जिनेन्द्रैः ॥३७४॥ ]

तस्मिन्नपि एवंभूते प्रणिधाने कृते सति वन्दनं निवेद-यितव्यमेव वस्तुतः संपादितत्वात्तदभावे तथाविधप्रणिधाना-

करणे प्रमादाद्धेतोर्दोषो भणितो जिनेन्द्रैर्विभागायातशक्यकुश-लाप्रवृत्तेरिति। उपसंहरन्नाह–

एयं सामायारिं नाऊण विहीइ जे पउंजंति।
ते हुंति इत्थ कुसला सेसा सव्वे अकुसला उ॥३७५॥

[एतां सामाचारीं ज्ञात्वा विधिना ये प्रयुंजते।
ते भवन्त्यत्र कुशलाः शेषाः सर्वे अकुशला एव ॥३७५॥]

एतामनन्तरोदितां सामाचारीं व्यवस्थां ज्ञात्वा विधिना ये प्रयुंजते यथावद्य कुर्वन्तीत्यर्थः ते भवन्त्यत्र विहरणविधौ कुशलाः शेषा अशुकला एवानिपुणा एव न चेयमयुक्ता सदि-ष्टवन्दनकथनतीर्थस्नपनादिदर्शनादिति। श्रावकस्यैव विधिशेष-माह—

अन्ने अभिग्गहा खलु निरईयारेण हुंति कायव्वा।
पडिमादओ विय तहा विसेसकरणिज्जजोगाओ ३७६

[अन्ये चाभिग्रहाः खलु निरतिचारेण भवन्ति कर्तव्याः।
प्रतिमादयोऽपि च तथा विशेषकरणीययोगात् ॥३७६॥]

अन्ये चाभिग्रहाः खलु अनेकरूपा लोचकृतघृतप्रदानादयः निरतिचारेण सम्यक् भवन्ति कर्तव्या आसेवनीया इति प्रति-मादयोऽपि च तथा शेषकरणीययोगा इति प्रतिमा दर्शनादि-रूपा यथोक्तं "दंसणवये"त्यादि आदिशब्दादनित्यादिभा-

त्नापरिग्रह इति ।

एवं च विहरिऊणं दिक्खाभावंमि चरणमोहाओ।
पत्तंमि चरमकाले करिज्ज कालं अहाकमसो ३७७।

[ एवं च विहृत्य दीक्षाभावे चरणमोहात् ।
प्राप्ते चरमकाले कुर्यात्कालं यथाक्रमशः ॥३७७॥ ]

एवं यथोक्तविधिना विहृत्य नियतानियतेषु क्षेत्रेषु कालं नीत्वा दीक्षाभाव इति प्रव्रज्याभावे सति चरणमोहादिति चारित्रमोहनीयात्कर्मणः प्राप्ते चरमकाले क्षीणप्राये आयुषि सतीत्यर्थः कुर्यात्कालं यथाक्रमशो यथाक्रमेण परिकर्मादिनेति ।

भणिया अपच्छिमा मारणंतिया वीयरागदोसेहिं ।
संलेहणाझोसणमो आराहणयं पवक्खामि ॥३७८॥

[ भणिता अपश्चिमा मारणान्तिकी वीतरागदोषैः ।
संलेखनाजोषणा आराधना तां प्रवक्ष्यामि ॥३७८॥ ]

भणिता चोक्ता च कैर्वीतरागद्वेषैरर्हद्भिरिति योगः का अपच्छिमा मारणान्तिकी संलेखना जोषणाराधनेति । पश्चिमैवानिष्टाशयपरिहारायापश्चिमा मरणं प्राणपरित्यागलक्षणं इह यद्यपि प्रतिक्षणमावीचीमरणमस्ति तथापि न तद्गृह्यते किं तर्हि सर्वायुष्कक्षयलक्षणमिति मरणमेवान्तो मरणान्तः तत्र भवा मारणान्तिकी बह्वच–इति ठञ्, संलिख्यतेऽनया शरीरकषाया-

दीति संलेखना तपोविशेषलक्षणा तस्या जोषण सेवनं भो इति निपातस्तत्कालश्लाघ्यत्वप्रदर्शनार्थः तस्या आराधना अखण्डना कालस्य करणमित्यर्थः तां प्रवक्ष्यामीति । एत्थ सामायारी आसेवियगिहिधम्मेण किल सावगेण पच्छा णिक्कमियव्वं एवं सावगधम्मो उज्जमिओ होइ ण सक्कइ ताहे भत्तपच्चक्खाणकाले संथारगसमणेण होयव्वं ति ण सक्कइ ताहे अणसणं कायव्वंति विभासा । अत्राह–

**काऊण विगिट्ठतवं जहासमाहीइ वियडणं दाउं ।**
**उज्जालियं अणुव्वय तिचउव्वाहारवोसिरणं ।३७९।**

[ कृत्वा विकृष्टतपः यथासमाधि विकटनां दत्वा ।
उज्ज्वाल्य अणुव्रतानि त्रिविधचतुर्विधाहारव्युत्सर्जनम् ३७९]

कृत्वा विकृष्टतपः षष्ठाष्टमादि यथासमाधिना शुभपरिणामपातविरहेण तथा विकटनामालोचनां दत्वा उज्ज्वाल्य पुनः प्रतिपत्त्या निर्मलतराणि कृत्वा अणुव्रतानि प्रसिद्धान्यणुव्रतग्रहणं गुणव्रताद्युपलक्षणमिति त्रिविधचतुर्विधाहारव्युत्सर्जनमिति कदाचित्त्रिविधाहारपरित्याग करोति कदाचिच्चतुर्विधाहारमिति ।

अत्र प्रागुक्तमेव लेशतः सम्यगनवगच्छन्नाह–

**चरमावत्थाइ तहा सव्वारंभकिरियानिवित्तीए ।**
**पव्वज्जा चेव तओ न पवज्जइ केण कज्जेण ।३८०।**

[ चरमावस्थायां तथा सर्वारम्भक्रियानिवृत्तेः ।
प्रव्रज्यामेव चासौ न प्रतिपद्यते केन कार्येण ॥३८०॥]

चरमावस्थायां मरणावस्थायामित्यर्थः तथा तेन प्रकारेणाहारपरित्यागादिनापि सर्वारम्भक्रियानिवृत्तेः कारणात्प्रव्रज्यामेवासौ श्रावको न प्रतिपद्यते केन कार्येण केन हेतुना इत्यत्रोच्यते ।

**चरणपरिणामविरहा नारंभादप्पवित्तिमित्तो सो।
तज्जुत्तुवसग्गसहाण जं न भणिओ तिरिक्खाणं॥**

[ चरणपरिणामविरहात् नारम्भाद्यप्रवृत्तिमात्रोऽसौ ।
तद्युक्तोपसर्गसहानां यन्न भणितस्तिरश्चामिति ॥३८१॥]

चरणपरिणामविरहादित्युक्तमेव स एव तथानिवृत्तस्य किं न भवतीत्याशङ्कयाह नारम्भाद्यप्रवृत्तिमात्रोऽसौ चरणपरिणाम इति कुतस्तद्युक्तोपसर्गसहानां यन्न भणितस्तिरश्चामिति तथाह्यारंभाद्यप्रवृत्तियुक्तानामपि पिपीलिकाद्युपसर्गसहानां चण्डकौशिकादीनां न चारित्रपरिणामः अतोऽयमन्य एवात्यन्तप्रशस्तोऽचिन्त्यचिन्तामणिकल्प इति पुनरपि केषांचिन्मतमाशंक्यते ।

**केई भणंति एसा संलेहणा मो दुवालसविहंमि ।
भणिया गिहत्थधम्मे न जओ तो संजए तीए ॥**

[ केचन भणंति एषा संलेखना द्वादशविधे ।
भणिता गृहस्थधर्मे न यतः ततः संयतः तस्याम् ॥३८२॥]

केचनागीतार्था भणन्ति एषा अनन्तरोदिता संलेखना द्वादशविधे पंचाणुव्रतादिरूपे भणिता गृहस्थधर्मे श्रावकधर्म इत्यर्थः न यतस्ततस्तस्मात्कारणात्संयतः प्रव्रजित एव तस्यामिति । अत्रोच्यते न भणितेत्यसिद्धम् ।

**भणिया तयणंतरमो जीव तस्सेस बारसविहो उ ।**
**एसा य चरमकाले इत्तरिया चेव ता ण पुढो ॥**

[ भणिता तदनन्तरमेव जीवत एष द्वादशविधः ।
एषा च चरमकाले इत्वरा चेयमेवं तस्मान्न पृथक् ॥३८३॥]

भणिता तदनन्तरमेव द्वादशविधश्रावकधर्मानन्तरमेव तन्मध्य एवाभणने कारणमाह । जीवत एष द्वादशविधः प्रदीर्घकालपरिपालनीयः, एषा संलेखना चरमकाले क्षीणप्राये आयुषि सति क्रियते इत्वरा चेयमल्पकालावस्थायिनी यस्मादेवं यस्मान्न पृथगियं श्रावकधर्मादिति । उपपत्त्यन्तरमाह—

**जं चाइयारसुत्तं समणोवासगपुरस्सरं भणियं ।**
**तम्हा न इमीइ जई परिणामा +चेव अवि य गिही ॥**

---

+ सुत्तंतरयो अ ।

[ यच्चातिचारसूत्रं श्रमणोपासकपुरस्सरं भणितम् ।
तस्मान्नास्यां यतिः परिणामादेव अपि च गृही ॥३८४॥]

यच्च यस्माच्च अतिचारसूत्रमस्याः श्रमणोपासकपुरःसरं भणितमागमे तच्चेदं "इमीए समणोवासएणं इमे पंचइयारा जाणियव्वा न समायरियव्वा तं जहा इहलोगासंसप्पओगेत्यादि" तस्मान्नास्यां संलेखनायां यतिरसौ श्रावकः अपि च गृहीति संबन्धः किं तु श्रावक एवेत्यर्थः कुत इत्याह परिणामादेव तस्यामपि देशविरतिपरिणामसंभवादनशनप्रतिपत्तावपीषन्ममत्वापरित्यागोपलब्धेः सर्वविरतिपरिणामस्य दुरापत्वात्सति तु तस्मिन् स्यात् यतिरिति सूत्रान्तरतश्च यत उक्तं सूत्रकृतांगे इत्यादीति । इयमपि चातिचाररहिता सम्यक्पालनीयेति तानाह—

इहपरलोगासंसप्पओग तह जीयमरणभोगेसु ।
वज्जिज्जा भाविज्ज य असुहं संसारपरिणामं ॥

[ इहपरलोकाशंसाप्रयोगौ तथा जीवितमरणभोगेषु ।
वर्जयेत् भावयेच्चाशुभं संसारपरिणामम् ॥ ३८५ ॥ ]

इह लोको मनुष्यलोकः तस्मिन्नाशंसाभिलाषः तस्याः प्रयोग इति समासः श्रेष्ठी स्याममात्यो वेति । १ । एवं परलोकाशंसाप्रयोगः परलोको देवलोकः । २ । एवं जीविताशंसाप्रयोगः जीवितं प्राणधारणं तत्राभिलाषप्रयोगः "यदि

बहुकालं जीवेयम्" इति । इयं च वस्त्रमाल्यपुस्तकवाचनादि-पूजादर्शनाद्बहुपरिवारदर्शनाच्च लोकश्लाघाश्रवणाच्चैवं मन्यते "जीवितमेव श्रेयः प्रत्याख्याताशनस्यापि यत एवंविधा मदुद्देशेनेयं विभूतिर्वर्तते । ३ । मरणाशंसाप्रयोगः न कश्चित्तं प्रतिपन्नानशनं गवेषते सपर्यायामाद्रियते न कश्चिच्छ्लाघते ततस्तस्यैवंविधचित्तपरिणामो भवति "यदि शीघ्रं म्रियेऽहं अपुण्यकर्मेति मरणाशंसा ।४। कामभोगाशंसाप्रयोगः जन्मान्तरे चक्रवर्ती स्याम् वासुदेवो महामण्डलिकः सुभगो रूपवानि-त्यादि एतद्वर्जयेद्भावयेच्चाशुभं जन्मपरिणामादिरूपं संसारपरि-णाममिति तथा । ५ ।

जिणभासियधम्मगुणे अव्वाबाहं च तप्फलं परमं ।
एवं उ भावणाओ जायइ पिच्चा वि बोहि त्ति ॥

[ जिनभाषितधर्मगुणान् अव्याबाधं च तत्फलं परमम् ।
एवं तु भावनातो जायते प्रेत्यापि बोधिरिति ॥३८६॥]

जिनभाषितधर्मगुणानिति क्षान्त्यादिगुणान् भावयेदव्या-बाधं च मोक्षसुखं च तत्फलं क्षान्त्यादिकार्यं परमं प्रधानं भावयेदेवमेव भावनातः चेतोभ्यासातिशयेन जायते प्रेत्यापि जन्मान्तरेऽपि बोधिर्धर्मप्राप्तिरिति ।

कुसुमेहि वासियाणं तिलाण तिल्लं पि जायइ सुयंधं।
एतोवमा हु बोही पन्नत्ता वीयरागेहिं ॥३८७॥

[कुसुमैः वासितानां तिलानां तैलमपि जायते सुगन्धि।
एतदुपमैव बोधिः प्रज्ञप्ता वीतरागैः ॥३८७॥]

कुसुमैर्मालतीकुसुमादिभिर्वासितानां भावितानां तिलानां तैलमपि जायते सुगन्धि तद्गन्धवदित्यर्थः एतदुपमैव बोधिरिति अनेनोक्तप्रकारेणोपमा यस्याः सा तथा प्रज्ञप्ता वीतरागैरर्हद्भिरिति।

कुसुमसमा अब्भासा जिणधम्मस्सेह हुंति नायव्वा।
तिलतुल्ला पुण जीवा तिल्लसमो पिच्च तब्भावो॥

[कुसुमसमा अभ्यासा जिनधर्मस्य इह भवन्ति ज्ञातव्याः।
तिलतुल्याः पुनर्जीवाः तैलसमः प्रेत्य तद्भावः ॥३८८॥]

कुसुमसमाः कुसुमतुल्या अभ्यासा जिनधर्मस्य क्षान्त्यादेरिह जन्मनि भवन्ति ज्ञातव्याः तिलतुल्याः पुनर्जीवा भाव्यमानत्वात् तैलसमः प्रेत्य तद्भावो जन्मान्तरे बोधिभाव इति। बोधिफलमाह—

इय अप्परिवडियगुणाणुभावओ बंधहासभावाओ।
पुव्विल्लस्स य खयओ सासयसुक्खो धुवो मुक्खो॥

[ एवं अप्रतिपतितगुणानुभावतः बन्धह्रासभावात् ।
प्राक्तनस्य च क्षयात् शाश्वतसौख्यो ध्रुवो मोक्षः ॥३८९॥]

एवमुक्तेन प्रकारेण अप्रतिपतितगुणानुभावतः सततसमवस्थितगुणसामर्थ्येन बन्धह्रासात्प्रायो बन्धाभावादित्यर्थः प्राक्तनस्य च बन्धस्य क्षयात्तेनैव सामर्थ्येन एवमुभयथा बन्धाभावे शाश्वतसौख्यो ध्रुवो मोक्षोऽवश्यंभावीति। एतदेव सूत्रान्तरेण भावयन्नाह—

**समत्तंमि य लद्धे पलियपहुत्तेण सावओ हुज्जा।**
**चरणोवसमक्खयाणं सागरसंखंतरा हुंति ॥३९०॥**

[ सम्यक्त्वे च लब्धे पल्योपमपृथक्त्वेन श्रावको भवति ।
चरणोपशमक्षयाणां सागराणि संख्येयान्यन्तरं भवन्ति ॥ ]

सम्यक्त्वे च लब्धे तत्वतः पल्योपमपृथक्त्वेन श्रावको भवति एतदुक्तं भवति यावति कर्मण्यपगते सम्यक्त्वं लभ्यते तावतो भूयः पल्योपमपृथक्त्वेऽपगते देशविरतो भवति पृथक्त्वं द्विःप्रभृतिरानवभ्य इति क्लिष्टेतरविशेषाच्च द्वयादिभेद इति चरणोपशमक्षयाणामिति चारित्रोपशमश्रेणिक्षपकश्रेणीनां सागराणीति सागरोपमाणि संख्येयान्यन्तरं भवन्ति एतदुक्तं भवति यावति कर्मणि क्षीणे देशविरतिरवाप्यते तावतः पुनरपि संख्येयेषु सागरोपमेष्वपगतेषु चारित्रं सर्वविरतिरूपमवाप्यते एवं श्रेणिद्वये भावनीयमिति।

एवं अप्परिवडिए संमत्ते देवमणुयजंमेसु ।
अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं ॥३९१॥

[ एवमप्रतिपतिते सम्यक्त्वे देवमनुजजन्मसु ।
अन्यतरश्रेणिवर्जमेकभवेनैव सर्वाणि ॥ ३९१ ॥ ]

एवमप्रतिपतिते सम्यक्त्वे सति देवमनुजजन्मसु चारित्रादेर्लाभः उक्तपरिणामविशेषतः पुनस्तथाविधकर्मविरहादन्यतरश्रेणिवर्जमेकभवेनैव सर्वाण्यवाप्नोति सम्यक्त्वादीनीति । यदुक्तं शाश्वतसौख्यो मोक्ष इति तत्प्रतिपादयन्नाह—

रागाईणमभावा जम्माईणं असंभवाओ य ।
अव्वाबाहाओ खलु सासयसुक्खं तु सिद्धाणं ॥

[ रागादीनामभावात् जन्मादीनामसंभवाच्च ।
अव्याबाधानः खलु, शाश्वतसौख्यं तु सिद्धानाम् ॥३९२॥]

रागादीनामभावाज्जन्मादीनामसंभवाच्च । तथा अव्याबाधातः खलु शाश्वतसौख्यमेव सिद्धानां इति गाथाक्षरार्थः । भावार्थमाह—

रागो दोसो मोहो दोसाभिस्संगमाइलिंग त्ति ।
अइसंकिलेसरूवा हेऊ वि य संकिलेसस्स ।३९३।

[ रागो द्वेषो मोहो दोषा अभिष्वङ्गादिलिङ्गा इति ।
अतिसंक्लेशरूपा हेतवोऽपि च संक्लेशस्य ॥३९३॥ ]

रागो द्वेषो मोहो दोषा अभिष्वङ्गादिलिङ्गा इति अभिष्वङ्गलक्षणो रागः अप्रीतिलक्षणो द्वेषः अज्ञानलक्षणो मोह इति । अतिसंक्लेशरूपास्तथानुभवोपलब्धेः हेतवोऽपि च संक्लेशस्य क्लिष्टकर्मबन्धनिबन्धनत्वादिति ।

**एएहभिभूआणं संसारीणं कुओ सुहं किंचि ।**
**जम्मजरामरणजलं भवजलहिं परियडंताणं ।३९४।**

[ एभिः अभिभूतानां संसारिणां कुतः सौख्यं किंचित् ।
जन्मजरामरणजलं भवजलधिं पर्यटताम् ॥ ३९४ ॥ ]

एभी रागादिभिरभिभूतानामस्वतन्त्रीकृतानां संसारिणां सत्त्वानां कुतः सुखं किंचिन्न किंचिदित्यर्थः किंविशिष्टानां जन्मजरामरणजलं भवजलधिं संसारार्णवं पर्यटतां भ्रमतामिति ।
एतदभावे सुखमाह—

**रागाइविरहओ जं सुक्खं जीवस्स तं जिणो मुणइ ।**
**न हि सन्निवायगहिओ जाणइ तदभावजं सातं।३९५**

[ रागादिविरहतो यत्सौख्यं जीवस्य तज्जिनो मुणति ।
न हि सन्निपातगृहीतः जानाति तदभावजं सातम् ॥३९५॥]

रागादिविरहतो रागद्वेषमोहाभावेन यत्सौख्यं जीवस्य संक्लेशवर्जितं तज्जिनो मुणति अर्हन्नेव सम्यग्विजानाति नान्यः किमिति चेन्न हि यस्मात्सन्निपातगृहीतः सत्येव तस्मिन्

जानाति तदभावजं सन्निपाताभावोत्थं सातं सौख्यमिति अतो रागादिविरहात्सिद्धानां सौख्यमिति स्थितं जन्मादीनामभावाच्चेति यथोक्तं तथावस्थाप्यते तत्रापि जन्माद्यभावमेवाह—

**दड्ढंमि जहा बीए न होइ पुण अंकुरस्स उप्पत्ती।**
**तह चेव कम्मबीए भवंकुरस्सावि पडिकुट्ठा ।३९६।**

[ दग्धे यथा बीजे न भवति पुनः अंकुरस्योत्पत्तिः।
तथैव कर्मबीजे भवांकुरस्यापि प्रतिकुष्टा ॥ ३९६ ॥ ]

दग्धे यथा बीजे शाल्यादौ न भवति पुनरङ्कुरस्योत्पत्तिः शाल्यादिरूपस्य तथैव कर्मबीजे दग्धे सति भवांकुरस्याप्युत्पत्तिः प्रतिकुष्टा निमित्ताभावादिति।

**जंमाभावे न जरा न य मरणं न य भयं न संसारो।**
**एएसिमभावाओ कहं न सुक्खं परं तेसिं ॥३९७॥**

[ जन्माभावे न जरा न च मरणं न च भयं न संसारः।
एतेषामभावात्कथं न सौख्यं परं तेषाम् ॥ ३९७ ॥ ]

जन्माभावे न जरा वयोहानिलक्षणा आश्रयाभावान्न च मरणं प्राणत्यागरूपं तदभावादेव न च भयमिहलोकादिभेदं निबन्धनाभावान्न च संसारः कारणाभावादेव एतेषां जन्मादीनामभावात्कथं न सौख्यं परं तेषां सिद्धानां किन्तु सौख्यमेव जन्मादीनामेव दुःखरूपत्वादिति अव्याबाधमिति यदुक्तं तदाह—

अव्वाबाहाउ च्चिय सयलिंदियविसयभोगपज्जंते।
उस्सुक्कविणिवत्तीइ संसारसुहं व सद्धेयं ॥३९८॥

[ अव्याबाधत एव सकलेन्द्रियविषयभोगपर्यन्ते।
औत्सुक्यविनिवृत्तेः संसारसुखमिव श्रद्धेयम् ॥३९८॥ ]

अव्याबाधत एव अव्याबाधादेव सकलेन्द्रियविषयभोगपर्यन्ते अशेषचक्षुरादीन्द्रियप्रकृष्टरूपादिविषयानुभवचरमकाले औत्सुक्यविनिवृत्तेरभिलापव्यावृत्तेः कारणात्संसारसुखमिव श्रद्धेयं तस्यापि तत्त्वतो विषयोपभोगतस्तदौत्सुक्यविनिवृत्तिरूपत्वात्तदर्थं भोगक्रियाप्रवृत्तेरिति। उक्तं च—

वेणुवीणामृदंगादिनादयुक्तेन हारिणा।
श्लाघ्यस्मरकथाबद्धगीतेन स्तिमितं सदा ॥ १ ॥
कुट्टिमादौ विचित्राणि दृष्ट्वा रूपाण्यनुत्सुकः।
लोचनानन्ददायीनि लीलावन्ति स्वकानि हि ॥ २ ॥
अंबरागुरुकर्पूरधूपगन्धान्वितस्ततः।
पटवासादिगन्धांश्च व्यक्तमाघ्राय निस्पृहः ॥ ३ ॥
नानारससमायुक्तं भुक्त्वान्नमिह मात्रया।
पीत्वोदकं च तृप्तात्मा स्वादयन् स्वादिमं शुभम् ॥४॥
मृदुतूलीसमाक्रान्तदिव्यपर्यंकसंस्थितः।
सहसांभोदसंशब्दं श्रुतेर्भयघनं भृशम् ॥ ५ ॥
इष्टभार्यापरिष्वक्तः तद्रतान्तेऽथवा नरः।
सर्वेन्द्रियार्थसंप्राप्त्या सर्वबाधानिवृत्तिजम् ॥ ६ ॥

यद्वेदयति संहृष्टं प्रशान्तेनान्तरात्मना।

मुक्तात्मनस्ततोऽनन्तं सुखमाहुर्मनीषिणः ॥७॥ इत्यादीति संसारसुखमप्यौत्सुक्यविनिवृत्तिरूपमेवेत्युक्तमिह विशेषमाह—

इयमित्तरा निवित्ती सा पुण आवकहिया मुणेयव्वा।
भावा पुणो वि नेयं एगंतेणं तई नियमा ॥३९९॥

[ इयं इत्वरा निवृत्तिः सा पुनः यावत्कथिका मुणितव्या।
भावाः पुनरपि नेयं एकान्तेन असौ नियमात् ॥३९९॥ ]

इयमिन्द्रियविषयभोगपर्यन्तकालभाविनी इत्वरा अल्पकालावस्थायिनी निवृत्तिरौत्सुक्यव्यावृत्तिः सा पुनः सिद्धानां संबन्धिनी औत्सुक्यविनिवृत्तिर्यावत्कथिका सार्वकालिकी मुणितव्या ज्ञेया पुनरप्रवृत्तेस्तथाभावात्पुनरपि प्रवृत्तेः भूयोऽपि नेयमिन्द्रियविषयभोगपर्यन्तकालभाविनी एकान्तेन सर्वथा निवृत्तिरेवौत्सुक्यस्य बीजाभावेन पुनस्तत्प्रवृत्त्यभावात् असौ सिद्धानां संबन्धिनी औत्सुक्यविनिवृत्तिः नियमादेकान्तेन निवृत्तिरेव ततश्च महदेतत्सुखमिति। उपसंहरन्नाह—

इय अणुहवजुत्तीहेउसंगयं हंदि निट्ठियट्ठाणं।
अत्थि सुहं सद्धेयं तह जिणचंदागमाओ य ।४००।

[ एवं अनुभवयुक्तिहेतुसंगतं हंदि निष्ठितार्थानाम्।
अस्ति सुखं श्रद्धेयं तथा जिनचन्द्रागमाच्च ॥४००॥ ]

इय एवमुक्तेन प्रकारेणानुभवयुक्तिहेतुसंगतमिति अत्रानु-

भवसंवेदनं युक्तिरुपपत्तिर्हेतुरन्वयव्यतिरेकलक्षणः एभिर्घटमानकं इदंदीत्युपप्रदर्शने एवं गृहाण नानिष्ठितार्थानां सिद्धानामस्ति सुखं विद्यते सातं श्रद्धेयं प्रतिपत्तव्यं तथा जिनचन्द्रागमाच्चार्हद्वचनाद्वेति ।

अधुना आचार्योऽनुद्धतत्वमात्मनो दर्शयन्नाह अथवा प्रकरणविहितार्थे विशिष्टश्रमणपर्यायप्राप्यं सत्क्रियया सर्वेषामासन्नीकृत्यात्मनोऽपराधस्थानमाशंक्याह—

जं उड्ढियं सुयाओ पुव्वाचरियकयमहव समईए ।
खमियव्वं सुयहरेहि तहेव सुयदेवयाए य ॥४०१॥[१]

[ यदुद्धृतं सूत्रात् पूर्वाचार्यकृतं अथवा स्वमत्या ।
क्षंतव्यं श्रुतधरैः तथैव श्रुतदेवतया च ॥ ४०१ ॥ ]

यदुद्धृतं सूत्रात्सूत्रकृतादेः कालान्तरप्राप्यं पूर्वाचार्यकृतं वा यदुद्धृतं अथवा स्वमत्या तत्क्षन्तव्यं श्रुतधरैस्तथैव श्रुतदेवतया च क्षन्तव्यमिति वर्तते ।

इति दिक्प्रदा नाम श्रावकप्रज्ञप्तिटीका समाप्ता ।

कृतिरियं सिताम्बराचार्यस्य जिनभट्टपादसत्कस्याचार्यहरिभद्रस्येति ।

## इति सटीकश्रावकप्रज्ञप्त्याख्यप्रकरणम् ॥

---

१ All Mss of the original text end thus, "श्री उमास्वातिवाचककृता सावयपन्नत्ती सम्मत्ता" ॥